# वेदेषु अलौकिक विज्ञानम्

## विषय सूची

# वेदेषु अतीन्द्रियविज्ञानम्



## उपोद्घातः

आर्यावर्ते अनादिकालात् वेद इति वाङ्मयविशेषः समेषां सुप्रसिद्धः व्यवहारयोग्यो वरीवर्ति। तस्य स्वरूपविचारः किंचिदत्र क्रियते। तथाहि "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते एनं विन्दन्ति वेदेन तस्माद्वेदस्य वेदता" इतीयं सूक्तिः प्रत्यक्षादिलोकसिद्धप्रमाणैः अज्ञातं विषयमस्माकं योग्यो वेदयति स एव वेद इति बोधयति। लोकस्वभावतस्सर्वोऽपि मानवलोकः इष्टप्राप्तिमनिष्टपरिहारं च कामयमानो दृश्यते। अतः क्षुद्रूपानिष्टपरिहाराय भोजनादौ प्रवर्तते। भोजनेन क्षुन्निवृत्त्या तृप्तो भवति। अतो धान्योत्पादनाय प्रयतते। तदर्थं क्षेत्रेषु कर्षणं तदनु बीजावापः ततस्संप्राप्तफल इव भवति। एवमस्य अधुना तत्तत्काले अनुभूयमानस्य सुखस्य प्रत्यक्षसिद्धत्वेऽपि कालान्तरे स्वेन अनुभविष्यमाणस्य सुखस्य पुरुषान्तरगतसुखस्य च अनुमानगम्यत्वमवश्यमङ्गीकर्तव्यम्। तथा जन्मान्तरगतसुखादीनामपि अनुमानगम्यत्वमस्तु इति चेन्न। "न कलञ्जं भक्षयेत्" "न सुरां पिबेत्" "अग्निहोत्रं जुहुयात् स्वर्गकामः" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादीनि वेदवाक्यानि श्रूयन्ते अत्र कलञ्जभक्षणादिः अनिष्टहेतुः अतः परिहर्तव्यः अग्निहोत्रादिः इष्टप्राप्तिहेतुः अतः अवश्यमनुष्ठेयः इतीममर्थं वेदेन विना अनुमानसहस्रेणापि तार्किकशिरोमणिरपि अनुमातुं न शक्नोति तथैव "वृष्टिकामः कारीर्या यजेत" "चित्रया यजेत पशुकामः" इत्यादि श्रुतिवाक्यैर्विना कारीर्याः वृष्टिसाधनत्वं चित्रायागस्य पशुप्राप्तिसाधनत्वं च अनुमानसहस्रेणापि ज्ञातुं शक्यं तस्मादतीन्द्रियार्थे वेद एव शरणीकरणीयः

मस्ति तस्मादेव । यद्येवं स्यात्तर्हि सर्वतापि पर्णेभ्यः
एव वृक्षः उत्पद्येत न बीजात् इत्यधमतिप्रसंगः
स्यादितिचेन्न सोऽपि ईश्वरसंकल्पाभावादेवेति
परिहर्तव्यो भवति । स च संकल्पः कार्यैकसमधि
गम्यः । तस्मात् वेदार्थे कुतर्कैः न चोदनीयम् ।

गायत्री कथं सोममाजहार ? इत्यत्र श्रुतिः
"कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेताम् सा कद्रू
स्सुपर्णीमजयत्साऽब्रवीत्तृतीयस्यामितो दिवि सोम
स्तमाहर तेनात्मानं निष्क्रीणीष्वेति "

कृ. य. तै. सं. कां ६. प्र. १. अ. ६.

सोमाहरण विषये काचन उपाख्या अत्र प्रस्तूयते ।
कद्रूः सुपर्णी चेत्युभे सपत्न्यौ पराजये दासीत्वम
भ्युपेत्य आवयोः सौंदर्याधिक्यं कस्याः इत्यात्म
सौंदर्य विषये ममैव सौंदर्यं ममैव सौंदर्यमिति
अस्पर्धेतां । विवादेस्मिन् मध्यस्थाः केचन कद्रूरेव
अत्यन्तं सुंदरीति कद्र्वा एव जयमूचिरे । ततस्सा च
कद्रूः सुपर्ण्या मद्दास्यं कर्तव्यमिति प्रतिज्ञाम
करोत् पराजये सति जयवत्यास्समीपे पराजितया
~~वन्या~~ दास्यं कर्तव्यमिति पूर्वमेव प्रतिज्ञा कृता अस्ति * तदनु
सारेण सुपर्ण्या दास्यं कर्तव्यम् । ततस्सा च कद्रूः सुप
र्ण्याः दास्य विमोकोपायं स्वयमेव एवमुपदिदेश ।
इतोऽस्माल्लोकादारभ्य गणनायां तृतीया द्यौः स्वर्ग
लोकः तस्मिन् लोके सोमो वर्तते । यद्यपि "महः",
"जनः", "तपः", "सत्यं" इत्येतेपि लोकाः द्युशब्दाभि
धेया भवन्ति । तथापि "इतः तृतीयस्यामिति

विशेषणानि नु अशोका स्वर्गवासकृत्यं तस्मात् स्वर्गीत् सोमं आहृत्य सोमे दत्ते सति त्वां मुञ्चामीति ।

ननु सोमाहरणे सुपर्ण्याः सामर्थ्याभावे आजन्म दास्यविमुक्तिः नस्यात् इतिशंकायां श्रुतिः स्वयमेवाह " इयं वै कद्रूरसौ सुपर्णी छंदांसि सौपर्णेयाः " इति इयंनाम भूलोकः तत्सं बन्धित्वात् कद्र्वाः सोमाहरणे शक्तिः नास्ति । असौ = द्युलोकस्वरूपिणी सुपर्णी अतएव उत्पतनशक्तिमत्वात् सोमाहरणे समर्था । किंच सौपर्ण्याः गायत्र्यादीनां छंदोरूपाणाम् स्वपुत्राणां सत्वात् सोमाहरणे सहायसंपत्तिरप्यस्तीति शायते । अतश्शक्नोति सुपर्णी सोममानेतुमिति

अनन्तरं श्रुतिः प्राह

" साब्रवीदस्मै वै पितरौ पुत्रान् बिभृतः तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेतिमा कद्रूरवोचदिति " कृ. य. तै. सं. कां ६-प्र. १-अं ६.

सुपर्णी स्वपुत्राणाम् गायत्र्यादीनां पुरतः स्वीयदास्यदुःखवृत्तान्तं वक्तुं कद्रूवचनं प्रोवाच । इतः भूलोकात् तृतीयस्यां दिवि स्वर्गलोके स्थितं सोममाहृत्य दातव्यम् । एवं कृते सति ममदास्यदुःखविमुक्तिः भविष्यतीति कद्रूः प्राह । अतः युष्माभिः तथा कर्तव्यम् । यतोहि यूयं ममपुत्राः । लोकेमाता पितरौ पुत्रान् एतादृशोपद्रव परित्राणार्थैव पुष्णीतः । अतएव पुन्नामनरकत्राणात् पुत्राइति पुत्रनि

र्चिनं ~~सपर्णा~~ श्रूयते पुन्नामनरकत्राणमुपलक्षणं नकेवलं
पुन्नामनरकत्राणमेव किंतु एतादृशदास्यदुःखत्रा
णमपि भवद्धीनमेव इति स्वपुत्रान् गायत्र्यादीनु
द्दिश्य सुपर्णी प्राह

ततः प्रौढत्वादादौ जगती निस्सहाया सोममानेतुं स्वर्गं जगाम। ततस्स्वर्गलोके "स्वान, भ्राज, अंघारे, बंभारे, हस्त, सुहस्त, कृशानु" एतन्नामकाः सप्त सोम रक्षकाः सोमं सर्वदा परिपालयन्तः वर्तन्ते तेषु रक्षकेषु सत्स्वपि) बलात् जगत्या सोमाहरणे कृते सति जगत्याः सोमरक्षकाणाम् भ्राजादीनांच युद्धं संजातं तस्मिन् युद्धे तस्याः जगत्याः पराजयस्संवृत्तः। किंच कीदृशः सः पराजयः इति चेत् पूर्वं जगत्याः "चतुर्दशाक्षरजगती" इति श्रुतेः चतुर्दशान्यक्षरा ण्यासन्। स्वान भ्राजादिभिः सोमरक्षकैस्सह युद्धकाले तस्याः अक्षरद्वयं नष्टमासीत्। तदा जगती द्वादशाक्षरा सत्येव समागता।

अनन्तरं त्रिष्टुप् स्वर्गलोकं गता इयमपि निस्सहायासती जगाम सोममानेतुं। इयमपिपरा जित्यैव समागता। अस्याः पूर्वं त्रयोदशाक्षरा ण्यासन् अस्या अपि सोम रक्षकैः सह युद्धेजाते सति तत्काले अक्षरद्वयं नष्टमासीत्। पूर्वं त्रयोदशाक्षरापि अद्युना इयं एकादशाक्षरा संजाता

अनन्तरं गायत्रीयपि इयं गमनकाले ज्योति स्वरूपां अजां सहायत्वेन स्वीकृत्य अपेक्षितसहा यासती स्वर्गं जगाम। यतः पूर्वं जगतीत्रिष्टुभौ

निरसहाय्येन पराजिते अभूताम्. अतो गायत्री ससहाया ययौ। प्रथमतः ज्योतिस्वरूपा अजैव स्वकीयेन तेजसा तं सोमं अभितः रुरोध। अतः एव अजायाः अजत्वं संपन्नं। अजधातोः गति क्षेपणार्थकत्वेन क्षेपणरूप. रोधन पर्यायत्वात् अज त्वं संपन्नमित्यर्थः। यदा गायत्री पक्षिरूपिणीसती स्वर्गलोकात् भूलोकं मानयतिसोमलता समये सोमलतायाः दलमेकं छिन्नं सत् भूमौ पपात।

पक्षिरूपिण्या गायत्र्या सोमलतानयनसमये छिन्नपतितदलं पलाशवृक्षरूपेण उत्पन्नमिति महदाश्चर्यमेतत्। कार्यकारणयोरेकप्रकृतिकत्वं दृष्टं लोके यथा मृद्घटादिषु सुवर्णकटकादिषु च तथा सोमलतापर्णात् पुनः सोमवृक्षोत्पत्तिः युक्ति सिद्धा। अधुना कथं सोमपर्णात् पलाशवृक्षोत्पत्तिः? इयं विरुद्ध कार्योत्पत्तिरित्यापत्तिः अत्र नास्ति। केवलमीश्वरेच्छैवात्र नियामिका। अचिन्त्यशक्तिमत्वादीश्वरस्य तस्येच्छापि अनुल्लंघ्यैवे त्यर्थः।

अत्र किंचित् वक्तुं शक्यं यतो गायत्र्या संपादितत्वेन गायत्री साम्यमस्मिन् पलाशवृक्षे दृश्यते। तथाहि गायत्री ब्रह्मस्वरूपिणी पलाश वृक्षस्यापि ब्रह्मतत्त्वओतत्वात् ब्रह्मसंबन्धोऽस्ति अतएव श्रुतिरेवं वक्ति

" देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत्। सुश्रवा वै नाम" इति " कदाचिद्देवेषु परस्परं ब्रह्मतत्वं

निरूपयन्तु शत्रु पलाशवृक्षः तत् ब्रह्मतत्वं अशृणोत् इत्येताद्दृशो ब्रह्म संबन्धः पलाशवृक्षस्य।

ननु वृक्षस्य पुरुषवत् श्रोतृत्वं कथं स्यात् ? इतिचेत पलाशवृक्षस्यापि चेतनत्वमस्ति। अस्मदादिवत् जन्म वृद्धि परिणामापक्षयादि कस्य सत्वात् किंच ब्रह्मतत्वश्रवणात् पलाशवृक्षस्य सुअवस्थ मपि श्रुत्या प्रतिपादितं। येन ब्रह्मतत्वश्रवणेन सुश्रोतत्वमस्माकं संपद्यते तथैव पलाशवृक्षस्य श्रोतत्वमस्माकं ... स्यापीत्यर्थः। एवं पलाशवृक्षस्य सोमाहरण द्वारतः गायत्रीसंबन्धः श्रुत्या निरूपितः।

अधुना पुनः श्रुत्या गायत्रीपादैरिव पलाशपर्णेष्वपि त्रित्वावगमादपि गायत्रीसंबन्धः प्रतिपाद्यते

"तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि। त्रिपदगायत्री" इति। छन्दोरूपिण्याः गायत्र्याः त्रिपात्त्वमिव पर्ण पलाशानामपि त्रित्वं सुसंगतं भवति।

अपिच सोमलतायाः पतितपर्णादुत्पन्नत्वेन पलाशवृक्षस्य। सोमलतायाः यथा यज्ञादिषु विनियोगः तथैव पलाशवृक्षस्यापि यज्ञादिषु विनियोगोऽस्तीति श्रुतितऽवज्ञायते।

तथाहि दर्शपूर्णमासयागे विशिष्टदर्शयागे महेन्द्राय दधिरूपं हविः देयं तदर्थ विः गोक्षीरप्रकृतिकं भवति। तदर्थं गावः अरण्यं प्रति घास भक्षणार्थं अवश्यं प्रेषणीयाः गवां वत्सानांच

उक्तमिपलौ [illegible] कया गोमन्: पृथक्कर
णीयाश्च भवन्ति वत्सा:।" शाखया गोचराणगा:
प्रस्थापयति,, इतिश्रौतसूत्रानुसारम् गवांप्रस्था
पनसाधनं शाखा इति गम्यते। साचशाखा
पलाशीया यदि स्यात् तर्हि स्वीयदेवतयैव अर
ण्यप्राति गवां प्रस्थापनं भविष्यति। तत्कथमिति
चेत् श्रुतिरेवमाह

ब्रह्म वै पर्णः। यत्पर्णशाखया वत्सानपाकरोति
ब्रह्मणैवानानपाकरोति। गायत्रो वै पर्णः।गायत्राः
पशवः। ......... यत्पर्णशाखया गाः प्रार्पयति
स्वयैवाना देवतया प्रार्पयति,, कृ.य.तै.ब्रा. 3-2-1
पलाशवृक्षस्य गायत्रीद्वारा ब्रह्मसंबन्धस्य
श्रुतत्वात् पलाशशाखया वत्सापाकरणेकृतेसति
ब्रह्मणैव वत्सापाकरणं कृतं भवति। यथाजग
न्निष्पादकं ब्रह्म प्रशस्तं तथा यागनि[illegible]ष्पादकः
पलाशोपिप्रशस्तः सः ब्रह्मत्वेन स्तूयते।
किंच पशूनां गायत्रीदेवता गायत्रीसंबन्धवत्या
पलाशशाखया गवां प्रस्थापने स्वीयदेवतयैव
गावां प्रस्थापनं भविष्यति। याशाखा गोप्र
स्थापने विनियुज्यते तस्याः छेदनसमये तस्याः
शाखायाः बहुपर्णत्व प्रागग्रादि गुणा अपि
आवश्यका इति श्रुतिःतान् गुणान् विधत्ते
"यं कामयेतापशुः स्यादिति। अपर्णांतस्मैशुष्का
ग्रामाहरेत्। अपशुरेवभवति। यंकामयेत

पशुमान् स्यादिति । बहुपर्णां तस्यैव शाखामाहरेत् पशुमन्तमेवैनं करोति । यत्प्राचीमाहरेत् । देवलोकमभिजयेत् । यदुदीचीमनुष्यलोकं प्राचीमुदीचीमाहरति । उभयोर्लोकयोरभिजित्यै ॥

तै. ब्रा. ३-२-१

यागकर्ता पशुविहीनो भवेदिति अध्वर्युर्यदि कामयेत तर्हि पलाशवृक्षस्यां दक्षरहितां शुष्कागां शाखामाहरेत् कर्मणि तादृशशाखाविनियोगेन यजमानः पशुसंपत्तिरहितो भवेत् । अथवा यागकर्ता पशुसंपन्नो भवेदिति यदा कामयते अध्वर्युः तदा पलाशवृक्षस्यां शाखां बहुपर्णां शाखोपशाखासहितां छिन्द्यात् । तादृशशाखया गवां वत्सानां च प्रस्थापने सति यजमानः कर्मफलभूतबहुपशुसंपन्नो भविष्यति । किंच पलाशवृक्षे स्थितासु शाखासु चतुर्दिक्षु प्रसृतासु मध्ये प्राचीं दिशं प्रति या शाखा प्रसृता तां शाखां अध्वर्युः यदि आहरेत् सा यदि कर्मणि विनियुक्ता तेन यजमानस्य देवलोकजयो भवेत् । यद्वा उदीचीदिक्प्रसृतां शाखां अध्वर्युर्यदि छिन्द्यात् तया छिन्नया शाखया कर्मणि विनियोगो भवेद्यदि तेन यागकर्तुः मनुष्यलोकजयः भविष्यति अथवा प्रागुदीच्युभयदिङ्मध्यगतां अर्थात् ऐशानीं शाखां यद्याहरेदध्वर्युः तया विनियोगश्च कर्मणि यदि स्यात् तेन यागकर्तुः देवमनुष्योभयलोकजयः भविष्यति ऐशान्याः दिशः

प्रागुद्दिष्टु अयपदि वक्ष्यं वध्यं व्याप्त.

उपनयन प्रकरणेपि पलाशशाखायाः महिमा एवं अवगम्यते। तथाहि वटुः पलाशदंडं स्वीकुर्वन् पलाश दंडमुद्दिश्य एतं मंत्रमाह " सुश्रवः सुश्रवसं माकुरु यथात्वं सुश्रव सुश्रवा असि ...... निधिगोपो भूयासं,, अयमर्थः यतः त्वच्छायायामुपविष्टेषु ब्रह्मविद्सु ब्रह्मतत्वं परस्परं कथयत्सु सत्सु त्वम श्रृणोः अतस्त्वं सुश्रवाः मामपि त्वं सुश्रवसं कुरु। त्वमिव अह मपि सुश्रवा भूयासं। किंच त्वं देवानां निधिः यज्ञादिः तत्साधनत्वेद्वेदोपि निधिरेव पलाश संबन्धं विना यज्ञानामनुष्ठानाभावात् मंत्राणामभावे यज्ञाभावात् देवानां यो निधिर्वेदः तं वेदं यज्ञनिर्वहण द्वारा यथात्वं रक्षसि तथा वेदाध्ययनं कृत्वा देवानां निधिं वेदं अध्ययनद्वारा रक्षिष्यामि। वेदाध्ययनं कर्तुं अधिकारसिद्धिः उपनयनेन भवि ष्यति अधुना कृतोपनयन संस्कारत्वात् मम वेदाध्ययने अधिकारोस्तीति स्पष्टमवगम्यते 'विद्याह वै ब्राह्मणमाजगाम गोपायमा,, इति श्रुत्या विद्यादेवता ब्राह्मण समीपमेत्य अध्ययनेन मां रक्ष इति प्रर्थितवती इति ज्ञायते अतः पलाशधारणेन वेदरक्षणं करिष्यामि इति वटुः उपनयने पलाशदंड धारणकाले ब्रवीति इतावता पलाश वृक्ष महिमा वेदेषु प्रोक्तः उपवर्णितः पलाशवृक्षस्य स्वरूपं वा? उपादानं वा उपयोगो वा प्रयोजनं वा न प्रत्यक्षेण नानुमानेन वा ज्ञातुं शक्यते। केवलमागमेनैव आगमस्य अतीन्द्रियार्थ प्रतिपाद कत्वात् इदं वैदिकं विज्ञानम् अतीन्द्रियमिति बोध्यम्

## अग्निप्रार्थना फलप्रदा।

—×—

"वेदेषु अनेकेषु मंत्रेषु अग्निप्रार्थना श्रूयते तथाप्रार्थनया अस्माकं किं प्रयोजनं दृष्टं वा अदृष्टं वा?

तथाप्रार्थितस्सन्नग्निः फलप्रदो भवतिवा नवा इति किंचिद्विचार्यते

तैत्तिरीयसंहितायां कस्यचनमंत्रस्य उर्थं विचारयामः

"अस्यप्रत्नामनुद्युतꣳ शुक्रं दुदुह्रे अह्रयः। पयस्सहस्रसामृषिम्॥" इति

अर्थः अस्य = अग्नेः प्रत्नां = पुरातनीं अनुद्युतिं = अनुकूलदीप्तिं गोस्थानीयां अह्रयः = ह्रीरहिताः ऋत्विजः सहस्रसां = बहुधनप्रदं ऋषिं = कर्मप्रवर्तकं पयः = क्षीरस्थानीयं शुक्रं = ज्योतिः दुदुह्रे = दुहन्ति।

भावः "काली कराली" इतिमुण्डकोपनिषत्प्रोक्तविधया अग्नेः अनेके ज्वालाविशेषास्सन्ति। तासुज्वपुरातना काचन ज्वाला अस्ति। सा अनुकूलप्रकाशरूपा प्रतिकूलप्रकाशरूपत्वे सर्वं निर्धक्ष्यति। यतः अनुकूलदीप्ति~~रूपा~~ रूपा अतएव गोस्थानीया इत्युच्यते भाष्ये विद्यारण्यस्वामिभिः। यथा गौः अनुकूलतयास्थित्वा क्षीरं ददाति तथा इयं दीप्तिरपि अस्माकं अग्न्युपासकानां फलप्रदा भवति। अतएव तत्क्षीरम् कर्मप्रवर्तकं। विना गोक्षीरेण देवतानां हविर्दानं कथं स्यात्? यदि क्षीरं देवेभ्यो दत्ते सति दैवानुग्रहः भवति। तेन अनुग्रहेण अस्माकं बहुधनसंप्राप्तिः भविष्यति। अतएव तत्क्षीरं ज्योतिरित्युक्तम्।

हविर्द्वारा ज्योतिस्स्वरूप देवतातृप्ति हेतुत्वात्।
यतः अयमग्निः बहुधनप्रदो भवति। अतएव
ऋत्विजः लज्जामकुर्वन्तः अग्नेस्सकाशात् प्रजा
पशु धनाङ्कुरादीनि बहूनि फलानि यजमानार्थं प्रार्थ
यन्ते।

ननु पयसा दध्ना यवैः तण्डुलैर्वा जुहुयादिति
यो विधिः श्रूयते तमनुसृत्य यद्यत् पयोदध्या
दिकं हविः अग्नौ हूयते तत्सर्वं अग्नौ हुतं सत्
विनाशावस्थापन्नं दृश्यते तत्कथमस्मदभीष्टसाध
कं भवेत् इति चेदत्र श्रुतिरेवं ब्रूते

"अग्निहोत्रं जुहोति यदेव किंच यजमानस्य स्वं
तस्यैव तद्रेतः सिञ्चति प्रजनने प्रजननं हि वा
अग्निः,, कृ. य. तै. सं. कां. १-प्र. ५-अ. ९.

अग्नौ दीप्यमानं यद्यद्धविः क्षीरादिकं तत्सर्वं नन
श्यति। किंतु यागकर्तुः यजमानस्य स्वीयं धनं
सत् भवति इष्यते। अत कश्चन दृष्टान्त उच्यते
प्रजोत्पादनस्थाने स्त्रीयोनौ पुरुषेण सिक्तं यद्रेतः तत्
नन श्यति किंतु प्रजारूपेण वृद्धिं प्राप्नोति। तद्वत् अग्नि
रपि स्त्रीवत् क्षेत्रवत् फलोत्पादकः। यथा प्रजोत्पादके
स्त्रीयोनौ क्षेत्रस्थाने च निक्षिप्तं बीजं धान्यादिबीजं च
फलोत्पादनाय भवतिष्ठते। तथैव फलोत्पादके अग्नौ
हुतं क्षीरादिकं हविरपि फलोत्पादनाय भवतिष्ठते
नन श्यति।

ननु विरुद्धमिदं कथमुच्यते अग्निप्रक्षिप्तं सर्वं
भस्म भवति इदं लोकानुभवसिद्धं इति चेत्

श्रुतिरेव समाधानमाह

"अथौषधीरन्तगता दहति तास्ततो भूयसीः प्रजायन्ते" इति कृ.य.तै.सं. कां. १ - प्र. ५ - अ. ७

इक्षुखण्डानां छेदनानन्तरं लोके तस्य दाहः क्रियते स च किमर्थमिति चेत् न मूलनाशार्थं किंतु अधिक प्ररोहार्थमेव दग्धेक्षुमूलानि ततोऽधिकतया प्ररोहं यान्ति इति लोकप्रसिद्धिः दृश्यते। किंच घर्मकाले दावाग्निः स्वसमीपं प्राप्ताः ओषधीः दहति तथापि दग्धास्ता ओषधयः वृष्टिकाले भूयस्यः प्रजायन्ते। तस्मात् प्रजननमग्निः तथैवाग्नौ हूयमानं हविः तत्काले च स्मावशिष्टमपि होमकर्त्रेऽभिप्रेत प्रजापशुधनधान्यायुरादिकं प्रयच्छति। होमकर्तुः प्रार्थनापि तथैव श्रूयते "आयुर्दा अग्नेस्यायुर्मे देहि वर्चोदा अग्नेसि वर्चो मे देहि तनूपा अग्नेसि तनुवं मे पाहि" इत्यादि श्रुतिवाक्येषु।

अत्र कंचन विशेषमाह श्रुतिः "यत्सायं जुहोति रेत एव तत्सिंचति प्रैव प्रातस्तनेन जनयति" इति। अग्नौ सायंकालहोमः योनौ रेतस्सेचनस्थानीयः सायंकालस्य रात्रिमुखत्वात् रात्रिषु हि पुरुषेण स्त्रीयोनौ रेतस्सिच्यते। प्रातःकालहोमस्तु उत्पादनस्थानीयः आविर्भावस्य ज्योतिस्वरूपत्वात् यथा पुरुषेण स्त्रीयोनौ सिक्तस्य रेतसः नाशाभावेपि रेतसः स्त्रीयोनौ तथैव स्थितिमात्रेणापि प्रयोजनं नास्ति। तस्य रेतसः पुरुषाकारेण परिणतिरावश्यकी तदर्थं दैवानुग्रहस्यापेक्षितत्वात्

तथैव अग्नौ निक्षिप्तस्य आज्यादेः हविषः नाशा भावेपि तद्द्वारा आयुरादयस्मदिष्ट फलप्राप्त्यर्थं अग्निप्रार्थनापि कर्तव्या भवति । अतएव श्रुति रेवमाह

" तद्वेतस्सिक्तं न त्वष्टाविकृतं प्रजायते यावच्छो वै रेतसस्सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायत एष वै दैव्यस्त्वष्टा योयजते बह्वीभि रूप तिष्ठते रेतस एव सिक्तस्य बहुशो रूपाणि विकरोति सप्रैवजायते श्रवश्रेयान् भवति यएवं विद्वानग्नि मुपतिष्ठते ,, कृ. य. तै. सं. क. १- प्र. ५- अ. ७ लोकेयोनौसिक्तं रेतः विश्वकर्मणा देवेन यदि पाणि पादाद्याकार विकारं ननीयेत तदा नैव प्रजोत्पत्ति स्स्यात " त्वष्टा रूपाणि पि॰ शत् ,," त्वष्टा वै रूपाणामी शे ,, इत्यादि श्रुति मर्यादानुसारं त्वष्टायावन्ति रूपा णि यादृशानि रूपाण्युद्दिश्य रेतो विकरोति ताव न्ति रूपाण्युत्पद्यन्ते । ततापि अस्मदाराधित देवा नुग्राह्य जन्य पुण्यविशेषः एतज्जन्मकृतोवा जन्मा न्तरीयोवा यदि स्यात् तदनुसारेणैव त्वष्टा विविध रूपाण्युत्पादयति । तथैव अस्मत्प्रार्थनानुसारेणैव अग्निरपि प्रजापशुधनायुरा द्यस्मदिष्ट फलप्रदाता भविष्यति । यथाक्षेत्रे श्रमानुसारेण अदृष्टानुसा रेण सस्यमुत्पद्यते । यथावा स्त्रीयोनौ अदृष्टा नुसारेण पुत्रोजायते तथैव " उपप्रयन्तो अध्वर मित्यादि मंत्रैः उपस्थानेन अग्निः इष्टान् सर्वान् भोगान् ददातीति वक्तव्यम् । अतएव "योयज

ते बर्हिर्भिरुपतिष्ठते, इत्युपस्थानकर्मविधिः


अत्र श्रूयते। उपस्थानंनाम प्रार्थना इत्यर्थः।
एवंज्ञात्वाऽयः उपस्थाता उपस्थानेन प्रजाधन
धान्यादिकमुत्पाद्य प्रतिदिनमुत्तरोत्तरं धन
धान्यादिभिः अभिवर्धते।

उपस्थानं प्रकारान्तरेण प्रशंसति श्रुतिः

"अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन्ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निं स्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन् स एभ्य स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्ते देवाः पशून् वित्वा कामा२ अकुर्वत य एवं विद्वानग्निमुपतिष्ठते पशुमान् भवति॥"

कृ.य.तै.सं क.१-प्र.५-अ.९.

कदाचित् राक्षसाः देवैः पूर्वं लब्धं पशुरूपं धनं
इतस्ततः स्थितं प्राप्तव्यं धनं गवादिकं तद्द्रव्यं देव
द्रव्यमपहृत्य तेन सह असुराः रात्रिं प्राविशन्
अन्धकारे अपिगताः राक्षसानां तमोगुणप्रधान
त्वात् रात्रिः देवानां सत्वगुणप्रधानत्वात् अहस्त्व
राक्षसानां स्वरूपे तमसि गमनमासीदित्यर्थः
ततो देवाः पशुहीना वयमिति रिक्तयन्तः
कंचन उपायमपश्यन् सः कः इति चेदुच्यते
रात्रिश्च अग्नेः प्रकाशाधिक्यात् रात्रिराग्नेयी
अग्नेः पशुस्वामित्वात् पशवोऽपि आग्नेयाः
राक्षसाः पशुभिस्साकं रात्रिं प्राविशन् अग्नेः

रात्रौ प्रकाशाधिक्यं अग्नि [illegible] मपि
अस्ति इति अग्निः प्रार्थनीयो भवति । प्रार्थनया
अग्निः अस्मभ्यनं पशुरूपं दास्यतीति देवैः
अग्निप्रार्थना कृता । तया प्रार्थनया स्तुतः सोऽग्निः
देवेभ्यः रात्रौ सकाशात् गवादि धनमाहृत्यादात्
ततस्ते देवाः संप्राप्तगवादिधनाः सन्तः सर्वान्
भोगानवापुः लोकेऽपि यः पुमान् एवमग्निमुपस्थानेन
प्रसन्नं करोति सः सर्वान् कामानवाप्नोति । तस्मात्
उपस्थानं प्रशस्तमित्यर्थः

अत्रेदं विचार्यते उपस्थानं कर्तव्यं वा न वा
यदि कर्तव्यं कदा? कर्तव्यम् ? इति

अत्र केचिदेवमाहुः रात्रावेवोपस्थानं कर्तव्यमिति
तत्र "नक्तमुपतिष्ठते ज्योतिषैव तमस्तरति इति श्रुतिं
प्रमाणीकुर्वन्ति । तथाहि रात्रिषु क्रियमाणानि क
र्माणि अंधकारे केन कथमनुष्ठितानीति न ज्ञायन्ते
रात्रौ अनुष्ठेयानि कर्माणि संकीर्णानि भवन्ति
यथा आसामनुष्ठितो व्रतविशेषः श्रेयान् भवति ।
तद्विपरीतानुष्ठाने पापं जायते । एते पुण्यपापे
कर्त्रा सह वर्तिष्यतः अग्न्युपस्थाने कृते सति अग्निना
ज्योतिषा रात्रिप्रयुक्तं तमोदोषं तरति उपस्थाता ।
अह्नि तु तमोदोषाभावात् उपस्थानमनावश्यकं ।
अतः रात्रावेव उपस्थानं कर्तव्यमिति एकः
पूर्वः पक्षः

इतः परं द्वितीयपक्ष उच्यते इमं द्वितीयपक्षं

विचारपुरस्सरं दर्शयति श्रुतिः

"उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्येभ्यो वा योऽहरहराहृत्याथैनं याचति स इन्वै तमुपार्च्छत्यथको देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयः"

कृ.य.स.तै.का.१.प्र.५-अ.९.

श्रुतिगतार्थस्तु विचारार्थो यथालोके तावत् श्रुतिगता प्रवृत्तिः विचारार्थी यथा लोके तावत् विचारेण संदेहनिवृत्तिः प्रसिद्धा तथा वेदेऽपि विचारेण संदेहापनयनमुपलभ्यते प्रकृते तत्त्वविचारपूर्वकं संदेहापनयनमुपलभ्यते प्रकृते अग्न्युपस्थाने विकल्पे विवादे संप्राप्ते सति विचारः क्रियते "उपप्रयन्तो अध्वरं इत्यादिभिः मंत्रैः।

अग्निप्रार्थनालक्षणं उपस्थानं कर्तव्यं वा नवेति संशयः नकर्तव्यमिति पूर्वःपक्षः कुत इति चेत् उपस्थानेन अग्नेः उपद्रवप्रसंगात्। तथाहि "आयुर्दा अग्नेस्यायुर्मे देहि वर्चोदा अग्नेसि वर्चोमे देहि तनूपा अग्नेसि तन्वं मे पाहि" इत्यादिषूपस्थानमंत्रेषु आयुरादीनि बहूनि याच्यन्ते तत्र यजमानः स्वल्पं हविर्दत्वा बहूनि फलानि याचमानः कथमग्निं न बाधेत लोके मनुष्याणामेव तावत् राज्ञे यः कोऽपि दरिद्रः यत्किंचित् जंबीरफलादिकं उपायनमाहृत्य ततः प्रतिदिनं एवं राजानं प्रति क्षेत्रधनादिकं यदि याचति तदासः याचकः तं राजानं पीडयत्येव स्वल्पं दत्वा बह्वपेक्षत इति स राजा तं कुप्येत्। यथा मनुष्येष्वपि एवमस्ति तदा को नाम महाप्रभावान् देवान् अग्न्यादीन् प्रतिदिनं यदपादि स्वल्पं हविः दत्त।

आयुरादीनि महान्ति याचितु यष्टुमिच्छेत्। तस्मात् अग्निः कदाचिदपि नोपस्थेय इति पूर्वपक्षे प्राप्ते
राद्धान्तोऽभिधीयते।

"अथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः॥ कृ. य. तै. सं. का. १-प्र. ५-अ. ९

श्रुतिगतोऽयं शब्दः पूर्वपक्षव्यावृत्त्यर्थः इदं मे भूयात् इदं मे भूयात् इत्येवं स्वाभीष्टमखिलं आशासितुमेव यजमानः प्रजापतिसदृशं इमं सर्वदेवतात्मकं अग्निं याचते इत्यभिज्ञा आहुः। लोकेऽपि राज्ञः चित्तवृत्तिमविज्ञाय अकांडे देहि देहि इत्युक्ते सति उपरोधो भवति यदा तु प्रशंसया विनोदेन वा परितोषमुत्पाद्य याचते तदा उत्साहयुक्तो राजा याचितादपि अत्यंतमधिकमेव ददाति तद्वत् आहिताग्नेः मंत्रैः उपस्थानमेव याच्ञा। सा च आहिताग्निकृता बहुविध प्रशंसापूर्वकत्वात् नोपरोधाय भवति। किंतु अत्यन्त परितोषायैव तस्मात्सायं प्रातश्च अग्निरुपस्थेयः एव भवति इति फलति।

न चात्र हविर्बाहुल्यं शंकनीयं मंत्रसामर्थ्येन तस्य वर्धमानत्वात् तथा च श्रूयते "याव्यमसि यिनुहि देवानित्याह। एतस्य यजुषो वीर्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। नहि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति॥ इति॥

अत्र कश्चन श्रौतसंप्रदायक्रमो ज्ञातव्यः "व्रीहीनव

हन्ति ,, इतिश्रुत्यनुसारम् यावत्तण्डुलनिष्पत्तिः ताव
त्तुषविमोकाय व्रीहीणामवघातः कर्तव्यः। तदनंत
रं पिष्टसंपादनाय तंडुलानां पेषणं कर्तव्यम् ततः
कृष्णाजिनं ततउद्धाम्य। ततोदृषत् एतेषां पदार्थानां
समंतकमाहरणं कर्तव्यं यथाक्रमप्रुपर्युपरि निक्षेप
श्च कर्तव्यः तस्यां दृषदि संस्थापितं चूर्णीकृत
तंडुलमुद्दिश्य त्वं धान्यमसि देवान् त्वं धिनुहि
इतिवदति यागकर्ता ननु धान्यानां प्रीतिजनकत्वं कथं
इतिनशंक्यं व्रीहयः पुरोडाशद्वारा आहुतिरूप
त्वं प्राप्य देवानां प्रीतिजनकाभवेयुः इतिबोध्यम्।
ननुदेवा महान्तः धान्यंतु स्तोकं स्तोकेनमहतां
प्रीतिः कथं ? स्यात् अतः देवान् प्रीणयति वाचोयु
क्तिरयुक्तेति चेन्न

नन्वत्र देवान् प्रीणयति यदुक्तं तत्र नास्त्यनुप
पत्तिः आहुतीरूपस्य धान्यस्य अल्पत्वेपि मंत्र
सामर्थ्येन तदभिवृद्धिमाह " एतस्य यजुषो वीर्ये
णेति,, श्रुतिवाक्यं । यद्यपाहुतिद्रव्यं यावज्जुहोति
तावदेव देवान् प्राप्नुयात् तदा कथमिदमल्पं देवान्
प्रीणयेत् इत्याशंक्येत नतुतावदेव देवान् प्राप्नोति
इति नियमोऽस्ति । किंतु यावत् काम्यते तावत् प्रव
र्धते ततः संभवत्येव प्रीणनम् । तस्मात् मनुष्या
णाम् यथा क्रयविक्रयौ भवतः तथायजमानदेव
तयोरपि यागतत्फले भवतः । तथाहि यथालोके
मानवाः महति आपणे स्वल्पमूल्येन पदार्थान् क्रीत्वा
तान् पुनः अधिकमूल्येन विक्रीय महाधनं संपादयन्ति

तथैव कैश्चिदेकैरपि देवताप्रीत्यर्थं पर्याप्तधनेन पुण्ययाग
विशेषान् अनुष्ठाय तैः महापुण्य प्राप्यं महासुख
विशेषं स्वर्गादि सुखमनुभवन्ति पश्चात्काले

विषयोऽयं भगवता श्रीकृष्णेन भगवद्गीतायां
"देवान् भावयतानेन ते देवा भावयन्तु वः
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥
इति सूक्तः। तस्मात् हविर्योजं क्षीरादि फलवैषम्येण
अन्नत्वदोषाभावात् अग्न्युपस्थानं अवश्यं कर्तव्यमेवे
ति सिद्धान्तः "उपप्रयन्तो अध्वरमित्यादि मंत्रैः
यदुपस्थानमुच्यते तस्य प्रशंसा क्रियते श्रुत्या "प्रजा
पतिः पशून् सृजत" इत्यादिकया प्रजापतिना पूर्वं
सृष्ट्यादौ सृष्टाः पशवः अहोरात्रदेवताभ्यां अन्त
र्हिताः। ते पशवः छन्दोभि रुपस्थानमंत्रैः अभि
प्रास्सन्तः लब्धाः तस्मात् छन्दोभि रुपस्थानं विन
ष्टवस्तुप्राप्त्यै आवश्यकं भवति *अतः इयमग्नि प्रार्थनाप्रति
दिनं कर्तव्या भवति तथा कर्तव्यतायां हेतुद्वयमुच्यते
यतः यागकर्तुः अवश्यप्राप्तव्य भीष्टधनादिकस्य
स्तुत्याग्नि देवतायां स्तुतेश्च सत्वात् अतः स्यं यथा
न भवति तथा नित्यमुपस्थानं वक्तव्यमेव। इतः परं
उपस्थान वेलायां उपस्थातुः नियमसंपत्तिं प्रकटयति
श्रुतिः "यो वा अग्निं प्रत्यङ्" इत्यादिका (1) यो यजमानः
प्रत्यङ्मुखस्सन् उपस्थानं करोति तं यजमानमग्निः
प्रत्यङ्मुखस्सन् प्रतिकूल्येनदहति (2) यो यजमानः पराङ्मुखस्सन्नुपति
ष्ठते स्यः प्रजया पशुभिश्च वियुक्तो भवति (3) यो यज
मानः ईषत्तिरश्चीन इव भवन् यदग्निमुपतिष्ठेत नद
ग्धो भवति प्रजापशु वियुक्तश्च न भवति किंतु विनस्रतया
उपस्थान करणेन तन्महिम्ना प्रजापशुभिश्च सहितो भवति

कारीरेष्टिः
(वृष्टियागः)

"वृष्टिकामः कारीर्या यजेत" इति श्रुतितः वृष्ट्यर्थं कारीरेष्टिः कर्तव्या भवति। लोके कदाचित् वृष्टिः प्रत्यक्षसिद्धा यागा अपि तथैव तत्तत् प्रत्यक्षसिद्धा एव एवमेव वृष्ट्यभावोऽपि लोकसिद्ध एव वृष्ट्यभावे जलाभावः तदभावे अन्नाभावः तदभावे जीवनयात्रायाः लोपो भवति अतः वृष्ट्यर्थं प्रयत्नः कर्तव्य एव। तथापि कस्य यागस्य? वृष्टिसंपादनसामर्थ्यमस्ति? इति केनवा ज्ञातुं शक्यं। सामान्यतः इदं ज्ञायते अस्माभिः पूर्वकर्मणो भवति वृष्टिपात इति तत्र कर्म कथं कर्तव्यम्? केनवा कर्तव्यम्? कदा कर्तव्यम्? कैः मंत्रैः कर्तव्यम्? कियति काले कर्तव्यम् इत्यादि संदेहानाम् समाधानं केनवा वक्तुं शक्यम्? अतीन्द्रियविज्ञानतात् वैदिकविज्ञानस्य वेदैकसमधिगम्यत्वमवश्यमुररीकर्तव्यम् विषयेऽस्मिन् कृष्णयजुर्वेदे तैत्तिरीयसंहितायां एवम् श्रूयते

"मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परिधत्त इति" कृ·य·तै·सं·कां २-प्र·४-अ·७

वृष्टिकामो यजमानः अग्न्यन्वाधानानन्तरम् आहवनीयम् दक्षिणतः अतिक्रम्य मारुतमसि इति मंत्रेण कृष्णतूषवस्त्रधारणं कुर्यात् यस्य कृष्णवर्णवस्त्रस्य दशाः अपि कृष्णवर्णाः भवन्ति तत् कृष्णवर्णवस्त्रं कृष्णतूषमित्युच्यते तेन वस्त्रधारणेन यजमानः पर्जन्यं वर्षयितुं समर्थो भवति। यतः जलपूरितैः मेघैः यदा सूर्यप्रकाशः आवृतो भवति तत्काले वृष्टौ सत्याम् तस्याः वृष्टेः स्वरूपमपि कृष्णवर्णं दृश्यते अतः यजमा

नोपि कृष्णवस्त्रप्रावृतो यदि भवेत् तदा वृष्टिसमान रूपस्सन् पर्जन्यं वर्षयितुं प्रभुर्भवेदित्यर्थः। किंच यजमानः कृष्णवस्त्रधारणकाले मंत्रं वदन् वस्त्र संबोधनेन एवं वक्ति। हे कृष्णवासः? त्वं मरु त्संबन्धयसि कथं अस्य वस्त्रस्य वायुसंबन्धः? इतिचेत् उच्यते स्वभावतः श्वेतवर्ण वस्त्रस्य कृष्णवर्णलाभार्थं कृष्णवर्णरंजनं क्रियते तत्तु जलसंपर्केण विना न भवति. कृष्णवर्णरंजनानंतरम् वस्त्रशोषणं क्रियते तत्तु वायुसंबन्धेनहि भवतीति लोकप्रसिध्दिं पश्यामः। हे कृष्णवासः? यतस्त्वं मरुतां बलमसि अतएव त्वं उदकधाराणाम् बहि र्निस्सरणमकृत्वा स्थिता ये मेघाः तेषां भेदनं कुरु तथाकरणे मरुत्संबधस्य तवैव सामर्थ्यमस्ति

ततो यजमानः भूलोके वृष्टिलाभार्थं पश्चाद्वातं प्रतिबध्य पुरोवातमुत्पादयेत् तत्कथं भवतीतिचेत् उच्यते "रमयत मरुत इति" मंत्रोच्चारण सामर्थ्येन भवति अस्मिन् मंत्रे संबोधनेन मरुतः प्रार्थ्यन्ते हे मरुतः? भवन्तः पुरोवातमुत्पाद्य सर्वतः व्याप्तं कुरुत पुरोवाते सर्वतः व्याप्तेसति पश्चाद्वातस्य निरोधो भविष्यति पश्चाद्वाते निरुध्देसति पुरोवा तप्रभावात् वृष्टिलाभो भविष्यति। अयंपुरोवातः यथा श्येनः वेगेन अन्तरिक्षे धावति तथा अयमपि वायुः प्रबलगतिस्सन् मनोवेगेन अस्मत्समीपमा गच्छति अस्य पुरोवातस्य प्रभावात् मेघगतं जलं मुक्तं सत् तीव्रधारारूपं यथा भवेत्

तज्जलं लोकबाधाकरञ्च यथा भवेत् तादृशं पुरोवातमुत्पादयेदिति अर्थः।

हे देवभिषजौ? अश्विनौ? तथा पुरोवातादुत्पादितं जलं यथा सर्वप्राणिनां क्षेमकरं स्यात् तथा परितो धारयतं। यतो हि भवन्तौ भिषजौ। भिषजां हि तादृशपरिज्ञानमस्ति यादृशं जलं प्राणिनां हितदायकं आरोग्यकरं रोगनिवारकं च भवेत्

अत्र काचन शकुनशास्त्रसम्मता सूचना क्रियते। यागस्थलस्य पुरस्तात् प्रत्यङ्मुख तथा कंचन कृष्णवर्णं अश्वं स्थापयेत् अश्वस्थापन काले यजमानः "अभिक्रन्दस्तनयेति" मंत्रमुच्चारयेदित्यर्थः। तस्याश्वस्य शरीरं कृष्णावस्त्रेणघर्षयेत् तेन घर्षणेन उपद्रवं सोढुं असहमानस्सन् अश्वः यथा आक्रन्देत् तथा घर्षयेत् तदा सोऽश्वः यदि शकृन्मूत्रं वा कुर्यात् मेघो वर्षिष्यतीति जानीयात्

अश्वघर्षणमंत्रार्थः हे अश्व त्वं सर्वतः शब्दं कुरु, मेघगर्जितमिव उच्चध्वनिं कुरु मेघस्य उदरे जलरूपं गर्भं संपादय। हे अश्व त्वं रथसदृशेन उदकसहितेन मेघेन सह सर्वतो गच्छ। किंच तं मेघं जलमोचनाय विमुक्तद्वारं कुरु। अयं मेघः उदकधारणयोग्य चर्ममय भस्त्रिकेव वर्तते। इमं मेघं त्वं खुरेण आकृष्टं कुरु ततः जलधाराभिः निम्नदेशाः यदि उदकसंपूर्णाः भवेयुः

तदा उन्नतस्थलान्यपि जलाप्लवनेन औन्नत्य रहितानीव समानि भवेयुः तथा त्वं कुरु इति कृष्णा उपमुद्दिश्य मंत्रेण यजमानोक्तिः

अनन्तरं "जिन्वन् उग्रः" इत्यादीन्यष्टौ वायो र्नामानि सन्ति तन्नाम विशिष्ट वायूद्देशेन पुरोवात इत्यादि मंत्रैः अष्ट वातनामाहुतिषु कृतासु सतीषु मंत्र प्रतिपाद्यो यो वायुः सः वृष्टेरीश्वरः संतुष्टस्सन् वर्षयति अत्र कारण उपपत्तिः स्तुत्या प्रतिपादिता तथाहि" जिन्व शब्द दित्याद्यष्ट नाम विशिष्ट वायूद्देशेन क्रियमाणाष्ट वातनाम संज्ञिका हुतिद्रव्यं यत् तत् वायोः स्वकीयो भागः भाग एव भागधेयः स्वार्थे धेय प्रत्ययः।

यद्वा वर्णव्यत्ययेन वायवे दातव्यो भागः यथा लोके कस्यचित् कस्मिंश्चित् वस्तुनि प्रीतिः स्यात् तादृशः प्रीतिकरः पदार्थः आम्रफलादिः आपणे यदि निक्षिप्तः तर्हि मद्यमानय इति यः कश्चित् यं कंचन सुहृदं प्रति वदति सः सुहृत् आपणे आगतं आम्रफलं क्रीत्वा वेगेन आगत्य चवस्तीतिकरं फलमिदं मया आनीतं स्वीकुरु इति वदति सः स्वीकृत्य संतुष्टो भवति तद्वत् वायुदेवतायै वातनामसंज्ञि काहुतिद्रव्येणसाकं यजमानः वेगेन आगत्य आहुतिद्रव्यं समर्पयति तत्स्वीकृत्य वायुः संतुष्टस्सन् अस्मै यजमानाय पर्जन्यं वर्षयति। न केवलं यजमानायैव। यतः वातनाम संज्ञिकाः अष्टौ होमाः प्राच्यादिदिशः चतस्रः आग्नेय्यादिनामिकाः अवान्तरदिशः चतस्रः आहत्य अष्टौ दिशः आहुतिसंख्यया दिशां संख्या साम्यमस्ति। तथा च प्रधानदिक्षु अवान्तरदिक्षु च वायुः वृष्टिं प्रकर्षेण-व्यावयति।

वायुः अष्टदिशापि आप्लावितवानित्यर्थः।
मंत्रार्थस्तु यः पुरोवातः सः लोके वृष्टिं प्रवर्तयन् प्रजाः प्रीणयन् आवर्ततां तादृशाय पुरोवाताय स्वाहुतमस्तु इति होमः क्रियते किंचायं पुरोवातः महावेगेन गच्छन् तीव्रजलधारा सहितस्सन् गर्जति गर्जनेन भयंकर इव दृश्यते। तथापि प्राणघातुकः अशनिः यथा न पतति तथा अवसेचनेन शब्दयन विद्युल्लक्षणेन प्रकाशेन युक्तो भवति वर्षधारया सस्यप्रोतादिः दीपकश्च भवति। अपिच अहोरात्रं वर्षधाराभिः महीतलं पूरयित्वा अयं वातः बहुधा भवति तथा अवर्षयत किल इति जनेषु ख्यातो भवति। अन्यच्च आतपेस्थितेसति विशेषेण विराजमानो दृश्यते एवं सर्वलोकधारणक्षमः पुरोवात इतिभावः
ततः वेदिमध्ये कृष्णाजिनं यथा प्राचीनग्रीवं उत्तरलोमच स्यात् तथा आस्तीर्य तस्मिन् खर्जूरसक्तून् करीरसक्तून् वा "मांदावाश्या इतिमंत्रेण कृष्णमधुना संयुज्य त्रीणि पिंडानि कुर्यात्
संयवनमंत्रार्थः मांदाः वाश्याः इत्यादीनि एकादश अपां नामधेयानि अंकुद्यन्तानि वृष्ट्यर्थं उदकानामाह्वानमत्र क्रियते। तच्चाह्वानं नामधेयपूर्वकं कृतं चेत् साधुकृतं भवति तेन तासामागमनंच साधुभवति। लोकेपि हेदेवदत्त ? त्वमागच्छ इति नाम्ना आहूतश्चेदेव आगच्छति विनानामधेयं "त्वमागच्छ," "त्वमागच्छ" इत्याह्वानमात्रेण नागच्छति अतः नामधेयोच्चारणपूर्वकं उदकानामाह्वानम् योक्ष्यतेतराम् "किंच" अपोवाइदं ओजधीना०

रश्मयो यन्मध्वक्य एवौषधीभ्यो वर्धिष्यथा अदस्य रश्मयो ओषधीभ्यो वृष्टिं निनयति ॥ इत्यत्र श्रुतौ अपामोषधीनां च वृष्टिप्रवर्तकत्वमुक्तं । अतएव उदकौषध्यमृतस्य सारभूतमधुनैव सकृत्स्नमभिषवनं क्रियते यागेऽस्मिन

तादृश्यो हे आपः पूर्व अस्मिन् कारीरेष्ट्यारम्भे कर्मणि वृष्टिरूप फलप्रदानेन मां रक्षत ।

मांदा इत्यनेन आपः हर्षहेतवः इत्युच्यन्ते जलस्य दर्शनेन पानेन च मानवानां संतोषः जायते । अतः ताः आपः मांदा इति कथ्यन्ते । वाशा इत्यनेन वर्षण जन्येन शब्देन युक्ताः आपः । वृष्टिसमये कश्चन शब्दविशेषः अस्माभिः श्रूयते तद्युक्ता इत्यर्थः शुन्ध्यूः = शुद्धि हेतवः यदा अस्माकं वा पदार्थानाम् वा अपवित्रता संजाता भवति तदा जलस्नानेन वा जलप्रक्षालनेन वा अपवित्रतां विनाश्य पवित्रतां संपादयन्ति आप इति धर्मशास्त्रेभ्यः अवगम्यते अतः शुद्धिहेतवः आपः इत्यर्थः । किंच अजिराः = सर्वदा प्रवाहरूपेण गमनशीलाः ज्योतिष्मतीः = शुक्लरूपयुक्तत्वमुदकस्य सुप्रसिद्धमेव तमस्वरीः = सूर्यप्रकाशाच्छादनेन तमो यथा भवति तथा गच्छन्त्यः ननु उदकानां सूर्यप्रकाशाच्छादकत्वं कथं इति चेदुच्यते मेघजनकत्वेन तद्द्वारा तमोजनकत्वं चेति बोध्यं उंदतीः = क्लेदयन्त्यः सर्वामपि भूमिं आपः क्लेदयन्ति तादृश्यः जलप्रवाहबाहुल्येन बहुफेनयुक्ताः जगन्मित्रभूताः ओषधीः पोषयन्तीति मित्रभूतः यथा ओषध्यः स्वीयरस दानेन रोगनिवर्तका भूत्वा

लोकस्य मितभृता भवन्ति तथा ऽदकमपि स्वीयरस
दानेन प्राणधारण रोग निवृत्त्यादि प्रयोजनं जन
यित्वा लोकस्य मितं भवतीत्यर्थः। किंच ताः आपः
भतभृतो पि भवन्ति कथमितिचेत देशाधिपतिं राजानं
स्ववृष्टि जन्य संतोषेण पोषयन्तीति भतभृतः। अपि
च शोभन संपूर्ण सस्य संपादनद्वारा शोभनरा
ष्ट्रकत्वं अपां भवतीति सुराष्ट्रा अपि भवन्ति आपः
ऽ तावता मांदादि नाम विशिष्टोदक स्वरूपमुक्तम्
अधुना सक्तूनां संयवनस्य आधारत्वेन
कृष्णाजिनं स्वीकरणीयं तत्कारणमुच्यते प्रकृति
यागेषु कृष्णाजिने हविस्स्वरूपान् व्रीहीन् अवह
न्ति तंडुलान् पिनष्टि च अतीत कार्यमिष्टावपि
कृष्णाजिने संयवने कृते सति हविस्स्वरूपं कृतं
भवति तद्धविः देवताप्रदानयोग्यं भवतीत्यर्थः
किंच वेदिमध्येऽएव साक्तुसंयवनं कर्तव्यम् वेदेः
यज्ञभूमित्वात् तत्र कृतस्य संयवनस्य हविर्लाभः
भविष्यति वेदेः बहिः यदि संयवनं कुर्यात् तदा
यज्ञभूमि प्रवेशाभावेन हविषः यागीयत्वं नभवति
अस्यामिष्टौ हविर्द्रव्यम् संक्तुद्रव्यमित्युक्तम् तस्य
सक्तु द्रव्यस्य प्रकृतिद्रव्यं किमित्याकांक्षायां श्रुतिः
किंचिदुपाख्यानं वक्ति। लोके यतयः केचन पारम
हंस्यरूपं चतुर्थाश्रमं प्राप्नुवन्ति तेषु केचन सन्या
सधर्मानुष्ठातारः सन्ति अपरे केचन सन्यास
धर्मविमुखाः भवन्ति सन्यासधर्मेषु स्वशाखो
पनिषत्सारायणमपि ऽक्रो धर्मः येषां यतीनाम्

मुखे ब्रह्मात्मप्रतिपादकः वेदान्तशब्दो नास्ति तान् यतीन् इन्द्रः आरण्यकेभ्यः शुनकेभ्यः प्राय च्छत् तथा कौशीतकब्राह्मणोपनिषदि इन्द्रस्य प्रतिज्ञा समाम्नाता "अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छमिति,,

ननु यतिहिंसाब्रह्महत्याया अपि गरीयसी तस्यां किमर्थं प्रवर्तते देवेन्द्रः इतियेदुच्यते इन्द्रस्य त्रिलोकाधिकारित्वात् दुष्टशिक्षणमिन्द्रेणावश्यं कर्तव्यम् "इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्,, "नित्यकर्म परित्यज्य वेदान्तश्रवणंविना वर्तमानस्तु सन्यासी पतत्येव न संशयः,, इति श्रुति स्मृति वचनान्यत्र प्रमाणभूतानि। देवताराधन प्रधानं गृहस्थाश्रमं विहाय तुरीयाश्रमं स्वीकृतवतां यतीनां अवश्यं वेदान्तविचारः स्वकर्तव्यतया विहितः स्वशाखोपनिषत्पारायणादिकमपि तथैव कर्तव्यम् यदि तुरीयाश्रमे ते तथा न कुर्युः तर्हि ते उभयाश्रमभ्रष्टाः भवेयुः गृहस्थाश्रमे देवताराधनस्य परित्यक्तत्वात् ते देवान् हन्तुमेव सर्वदा प्रयतमानाः किंच सन्यासाश्रमधर्मानुष्ठानाभावात् उत्तमाश्रमे प्रच्छन्नवेषाः ते असुराः इत्येव वक्तव्यम् अतस्ते पतिताः तान् हत्वा आरण्यकशुनकेभ्यः समर्पणं देवेन्द्रस्य न दोषाय भवति किंतु पुण्यमेव तेच सालावृकाः देवेन्द्र समर्पित ~~यति शरीराणाम्~~ यतिशरीराणि नीत्वा यज्ञवेदिसमीपे भक्षितवन्तः इति "तान् दक्षिणतः उत्तरवेद्या आदन,, इतिश्रुतिवाक्यात् ज्ञायते ननु तद्भक्षणं शुनकैः यज्ञवेदिसमीपे किमर्थंकृतं?

इत्यत आचार्य श्रीविद्यारण्य चरणा ऊचुः "वेदान्त
श्रवण वांछां विना नित्यकर्मपरित्यक्तवतां भवतामीदृशी
गतिरिति प्रदर्शयितुं वेदिसमीपे भक्षणं कृतमिति।
अत्रायं भावः भोः सन्यासिनः भवतां सन्यासाश्रमे
अधिकारो नास्ति गृहस्थाश्रमे एव भवतामधिकारः
गृहस्थाश्रमे हि भवद्भिः यज्ञादि वैदिकं नित्यं कर्म
अनुष्ठेयमेव इयं यज्ञभूमिः अस्यामियं उत्तरवेदिः
अतस्त्यक्त्वा यत् कर्तव्यं वैदिकं कर्म तत् परित्यज्य
उत्तमाश्रमेपि विहित धर्मानुष्ठान रहितानां भवता
मीदृशी गतिरिति सन्यासिजीवामन उद्दिश्य एतद्दोष
दुर्गति प्रदर्शने श्रुति तात्पर्य बोध्यं। तथाच
सालावृकैः भक्ष्यमाणानां यतीनां यानि शिरःक
पालास्थीनि भूमौ अपतन् तानि खर्जूरवृक्षत्वेन
उत्पन्नानि। लोके येताभिधानाः महाखर्जूराः
तेषां फलानि शिरःकपाल सदृशानि लक्ष्यन्ते तेषां
फलानां रसः यदा उद्वमुक्तस्य भूमौ अपतत्
तदा तस्मात् रसात् सोमलतासदृशीनां सोमप्रतिनि
धिभूतानां लतानां अंकुररूपाणि करीर शब्दवा
च्यानि करीराण्युत्पन्नानि करीरशब्दः "वंशांकु
रे करीरोरस्त्री तरुभेदे घटेचना" इत्यमरकोशात्
कस्मिश्चित् तरुभेदे प्रयुक्तो भवतीति ज्ञायते. एतेषां
करीराणां सोमांकुरसदृशत्वात् इमानि करीराणि
सौम्यानि तदाहुतिश्च सौम्यासतो दिवः सका
शात् वृष्टिं च्यावयति। लोकेपि सोमाहुतिद्वारा
दिवः वृष्टिं प्राप्नोति खलु यज्ञादिद्वारेति शेषः

" अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते
आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः इतिस्मृतेः
एतावता ये खर्जूरवृक्षाः तएव तदीयरसद्वारा करीर
वृक्षा आसन् ते सोमसदृशाः भवन्ति तेषां खर्जूर
फलानां चूर्णं वा करीरफलानां चूर्णं वा अस्यां
कारीरेष्टौ सक्तुद्रव्यमिति फलति ।

अधुना पिंडीकरणाय सक्तुसंयवन साधनं
श्रुतिः विदधाति "मधुषा संयौतीति" माक्षिका हि
नानाविधेभ्यः पुष्पेभ्यः रसानादाय मधुकु
र्वन्ति । तेषां च रसानां औषधिजन्यत्वेपि उदक
रससंबन्धोऽस्तीति अवश्यमुररीकर्तव्यम्
उदकेन हि औषध्यः वृद्धिं प्राप्नुवन्ति तथा वृद्धिं
गमिताः औषध्यः पुष्पद्वारा जलरसमिश्रित
मेव स्वीयरसं मधुत्वेन मक्षिकाभ्यः समर्पयन्ति
अतः मधु जलसारभूतं औषधिसारभूतं च
अत इदं मधु अद्भ्यः औषधीभ्यश्च संजातं उभय
रसात्मकं अतः अद्भ्यः औषधीभ्यश्च वृष्टिं
भूलोके प्रवर्तयिष्यतीति इतीयं मधुनः शक्तिः
इदं मधु भ्रमरसंपादितं चेत् कृष्णं भवति कृष्ण
मध्वेवात्राभिप्रेतं यागीयमित्यर्थः । मेघानां कृष्ण
वर्णत्वात् तत्साम्यं मधुनोपीति बोध्यं । तेन कृष्ण
मधुना संयुक्तानि सक्तुपिंडानि पुष्करपलाशैः
बद्ध्वा कृष्णाजिनेनिधाय "वृष्णो अश्वस्य संदान
मसि" इतिमंत्रेण कृष्णेन दाम्ना बध्नीयात् ।

अथ कृष्णाजिनबंधनमन्त्रार्थः उच्यते ।
हे रज्जो ? त्वं सेचन समर्थस्य अश्वस्य बंधनरज्जुरसि अतः कृष्णवर्णेन त्वया सक्तुपिंडसहितं कृष्णाजिनं वृष्ट्यर्थं उपनह्यामि अश्वः यथा सेचनसमर्थः एवं पर्जन्योपि सेचन समर्थः सन् उदकपूरणेन कृष्णएवभूत्वा पश्चात् वर्षति।
यथा मेघः कृष्णवर्णः तदर्थं रज्जुरपि कृष्णवर्णः मेघसरूपेण रज्जुना सन्नहनेन वृष्टिलाभार्थं एनं पर्जन्यं समृद्धं करोति ।सेचन समर्थस्य अश्वस्य संबन्धि रज्जुना सक्तुपिंडबंधकरणेन मेघस्यापि वृष्टिद्वारा भूलोक सेचन सामर्थ्यमधिकं भविष्यति तेन झटिति वृष्टिपातलाभः भविष्यति इतिभावः ।

ततः उत्करे एकं शकटं स्थापयेत्

उत्करोनाम उत्किरति अस्मिन् सतृणं पांसु इत्युत्करः वेदेः पूर्वोक्ति द्वितीय देशात् यत्र स्तंब यजुराहरणं कृतं ततः उत्तरतः वेद्याः बहिः द्विपदमतिक्रम्य अवस्थितं स्थलं उत्करमित्युच्यते तस्मिन्नुत्करे स्थापितं शकटं प्रागीषं तिगवं तिगयुंच यथाभवेत् तथा कुर्यात् तस्मिन् शकटे पूर्वस्यां गयायां सक्तुपिंडत्रय सहितं कृष्णाजिनमाबध्नीयात् तत् अहोरात्रावसक्तम भवति सक्तुबंधने कृतेसति यदिपर्जन्योवर्षेत् तदा त्रीणि सक्तुपिंडान्येव जुहुयात् यदिपर्जन्योनवर्षेत् तदा देवाश्शर्मण्या इतिमंत्रेण मध्यमायां गयायां सक्तुपिंडसहितं कृष्णाजिन माबध्नीयात तत् अहोरात्रावसक्तं भवति।

सक्तुबंधने कृते सति यदि पर्जन्यो वर्षेत् तदा सक्तु
पिंडान्येव जुहुयात् । यदि पर्जन्यो न वर्षेत् तदा देवा
स्सपीतय इति मंत्रेण तृतीयायां गथायां सक्तुपिंडस्य
हुतं कृष्णाजिनमावध्नीयात् तच्च अहोरात्रावसक्तं
भवति । सक्तुबंधने कृते सति यदि पर्जन्यो वर्षेत्
तदा सक्तुपिंडान्येव जुहुयात् तदापि यदि पर्जन्यो
न वर्षेत् श्वोभूते चतुर्थे अहनि धामच्छदादीनि
हवींषि निर्वपेत् इति श्रौतसूत्रकाराणां याज्ञिक
प्रयोगक्रमोयं अत्र गथाशब्दः छदिपरः " अथ
पटलं छदिः ,, इत्यमरकोशात् ज्ञायते आवरण
मित्यर्थः शकटे उपवेशनस्थाने पदार्थानाम्
अधस्तात् पतनं यथा न भवेत् 'तथा आवरणम्
क्रियते तच्च वैणवं वा अन्यदीयं वा स्यात् तस्य
छदिरिति नाम अस्य गथा इत्यनर्थान्तरम् । एवं
रीत्या सक्तुबंधने कृते सति वर्षणपक्षे पुरोडाश
निर्वापमंतरेण सक्तुपिंडान्येव जुहुयात् प्रथम
दिने वृष्टौ सत्यां पिंडत्रय होमेनैव कर्मसमाप्तिः
तथैव द्वितीये दिने वा तृतीये दिने वा वृष्टौ सत्यां
पिंडत्रयहोमेनैव कर्मसमाप्तिः त्रिष्वपि दिनेषु
वृष्ट्यभावे चतुर्थ दिने पुरोडाशनिर्वापं कुर्यात्
अत्र छदिस्तये सक्तुबंधनं अहोरात्रावसक्तं
भवतीति यदुच्यते तत्सूत्रकारेण द्वितीया विभक्तिः
प्रयुक्ता स्या अत्यन्तसंयोगवाचिनी तथाच अहो
रात्रयोः निरंतरं बंधनम् आवश्यकमिति गम्यते ।
अयं विषयः शाख्यापि समर्थितः " अहोरात्रे वै

मित्रावरुणौ इत्यादिना । अहोरात्रे मित्रावरुण स्वरूपे अह्नः सूर्यप्रकाशयुक्तत्वात् मित्रत्वं रात्रेश्च अंधकारेण आवृतत्वात् वरुणत्वं पर्जन्यश्च अहोरात्राभ्यामंतरेण वर्षितुं नक्षमः कृतः? अहोरात्रातिरिक्तस्य कालान्तरस्याभावात् । तथा सति रात्रौवा दिनेवा सर्वदावा पर्जन्यो वर्षिष्यतीति ज्ञातुमशक्यत्वात् निरंतरं बध्नीयादित्यर्थः सक्तुद्रव्यस्य अहोरात्रयोः निरन्तर बन्धनेन मित्रावरुणप्रीतिः भविष्यति अहोरात्रयोः मित्रावरुणस्वरूपत्वात् तथाच सक्तुद्रव्यं मित्रावरुणयोः स्वीयो भागधेयः संपन्नः भाग एव भागधेयः स्वार्थे धेयप्रत्ययः । लोके यस्य पुंसः यस्मिन् पदार्थे प्रीतिरस्ति तं पदार्थं तस्मै दीयते चेत् सः संतुष्टो भूत्वा अस्य दभीष्टं वितरिष्यति इति जानन् पुरुषः लोके यस्मै कस्मैचित् प्रीतिकरं पदार्थं दत्वा तस्मात् अभीष्टं प्राप्नोतीति प्रसिद्धमेव तद्वदत्रापि मित्रावरुणयोः सक्तुपदार्थस्य प्रीतिकरत्वात् सक्तुपिंडानां अहोरात्रं निरंतरं बंधनेन मित्रावरुणयोः स्वीयभागं स्वीकृत्य यजमानः मित्रां वरुण समीपं गच्छतीत्येववक्तव्यं तथाविधावतीति श्रुतौ श्रूयते कस्यचित प्रीतिकर पदार्थलाभे दातुं वेगेन गमनं प्रसिद्धं तद्वदित्यर्थः तथाच तेन सक्तुपदार्थ दानेन मित्रावरुणौ संतुष्टौ सन्तौ अस्मै यजमानाय अहोरात्रयोः पर्जन्यं वर्षयतः ।

त्रिषु दिनेषु प्रथम द्वितीय तृतीय छदिरस्ताये

क्रमेण सत्कुर्विंऽस्ति कृष्णाजिन बंधनार्थं मंत्रत्रयमस्ति कृष्णयजुर्वेद संहितायां तत्तन्मंत्रोक्ताभिः देवताभिः यजमानेन प्रार्थिताभिः अनुगृहीतो यजमानः प्रतिदिनं वृद्धिमिच्छति ।

अथ मंत्राणां विवेकः प्रोच्यते "उद्नोदत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततोनो वृष्ट्यावत" कृ.य.तै.सं.कां २-प्र.५-अ.४. इत्ययमर्धर्चः त्रयाणां मंत्राणां शेषत्वेन अनुषज्यते

मंत्रार्थः हे देवाः उदकानि प्रयच्छत कीदृशाः देवाः इतिचेत् प्रजानां निवासकारणभूताः

ननु प्रजानां निवासे कथं ते कारणभूता भवन्ति इतिचेत् समाधीयते । लोके प्राणि जीवनयात्रायै जलमावश्यकं "आपोमयः प्राणः" इति श्रुतेः प्राणधारणं जलसाध्यं अतः यत्र जलसमृद्धिः स देशः निवासयोग्यो भवतीति लोकानुभव सिद्धः एवंविधः तज्जलं दैवाधीनं अतएव जलार्थं देवाः प्रार्थ्यन्ते के ते देवाः इतिचेदुच्यते "अग्नेसोमसूर्येति" प्रथम मंत्रनिर्दिष्टाः अग्निसोम सूर्याः उदकदाने देवानामुपायं वक्ति श्रुतिः

हे देवाः "उदधिं भिन्तेति" अत्र उदधिशब्दः उदकं धीयते अस्मिन्निति व्युत्पत्त्या मेघार्थकः उच्यते तं मेघं पृथिव्यन्तरिक्षद्युलोकत्रये निमित्तोकृत्य विदारयत मेघविदारणानन्तरं पर्जन्यो वर्षिष्यति तया संप्राप्तया वृष्ट्या अस्मान् रक्षत

अथ द्वितीयमन्त्रार्थः मित्रावरुणार्यमन् इत्येवमादयो हे देवाः भवन्तः शर्मण्याः सर्वलोकसुखप्रदाइति व्याख्येयं

तृतीयमन्त्रार्थः अपांनपात् इति देवतानामधेयमेतत्. अपांनपात् इत्यनेन उदकानां अविनाशयिता इत्यर्थः लक्ष्यते तथैव आशुहेमन् इति कस्यचित् देवताविशेषस्य नामधेयं अयं देवः शीघ्रगमनशील: इत्यर्थो लक्ष्यते तादृशाहे देवाः भवन्तस्सर्वे समान सोमपाना इति व्याख्येयं

"यदि वर्षिष्यन् डोरेव जुहुयात्" इति कल्पसूत्रकृताम् महर्षीणाम् सिद्धान्तानुसारम् पिंडतर्पणहोमार्थं अन्तौ मंत्रत्रयं श्रूयते तत्र प्रथम सक्तुपिंडहोममंत्रार्थः अग्निसोमसूर्यादि देवाः पृथिवीं यदा विशेषेण क्लेदयन्ति तदानीं उदकवाहक पर्जन्यद्वारा दिवापि तमः प्रसारयन्ति किमुतरात्रौ । किंच कारीरेष्ट्या ऋत्विजः यदा देवता प्रीत्यर्थं यथा शास्त्रं हवींषि समर्पयन्ति तथा हविर्दानमहिम्ना उदक धारको मेघः अन्तरिक्षे सर्वतः प्रसारितो भवति। तथाच ऋत्विज एव यागकर्तृ यजमानाय देवताहविर्दानद्वारा अन्तरिक्षे जलप्रपूर्ण मेघं सर्वतः प्रसारितवन्तः इत्यर्थः सचमेघः पूर्वमेकोपि अधुना होमप्रभावात् बहवो मेघा भूत्वा द्यावा पृथिवी क्षेमार्थं विविधां वृष्टिं सृजन्ति ताश्च वृष्टयः सर्वथा उदकरहितायां मरुभूमावपि प्रवर्तन्ते । हे मरुद्देवताः यूयं समुद्रसदृशात्-

मेघात् वृष्टिमुत्पादयत तया वृष्ट्या वीरुधुकान्
भूप्रदेशान् आप्लावयथ । हे मरुत: ग्रीष्म धर्म
काले सूर्यसंतापात् संप्राप्तं भूमिशोषं वृष्टिया
तेन विनाशयितारो भवथ । जगदाप्लवनरूपं
मंगलकार्यमनुगृहीतवतां भवतां मेघा: धेनु
सदृशास्सन्त: सर्वदा उपकुर्वन्त्येव मेघानां
धेनुतुल्यत्वं कथनेन "धेनुस्स्यान्नवसूतिका" इति
अमरकोशात् या अवश्य क्षीरप्रदा सैव धेनुरित्यर्थ:
तथैव मेघा अपि सर्वदा वर्षणशीलास्सन्त: भव
तामुपकुर्वन्तीत्यर्थ: । किंच हे मरुद्देवा: अस्मदीये
कारीरेष्ट्याख्येकर्मणि स्थानारुढ्य धूमाख्यसमाग
च्छत्सु सत्सु पृष्ठत: भवदीयस्थानमुत्सृज्य सर्वे
ऽपन्ये देवा: भवत्सहायार्थं स्थानारुह्य सम्या
गच्छन्तु इत्यर्थ: ।

"अथास्यां धूममुद्यन्तमनुमंत्रयते असित
वर्णा हरय इति" श्रौतसूत्रानुसारम् आहवन
न्तरं उद्यन्तं धूमं "असितवर्णा" इति मंत्रेण अनु
मंत्रयते मंत्रार्थ: अग्नौप्रक्षेपानन्तरं अग्निनादह्य
मानेभ्य: करीरसक्तुपिंडेभ्य: येनिर्गता धूमा: ते
दिवमुत्पतन्ति । ते धूमा: कृष्णवर्णा: मेघनिष्पादनाय
होम्यद्रव्य रसहरणशीला: पक्षिवत् प्रसारितपक्षस
दृशा: मेघाभूता सूर्यमंडलादिकमाच्छादयन्ति
इते मेघा: धूमनिष्पन्नास्सन्त: स्वोदरेषु जलस्थानानि
निर्माय आवृत्य वर्तन्ते तत: पृथिवीं क्लेदयन्ति ।

अनन्तर उक्त कृष्णा आमपक्वां स्थाली
"सृजा वृष्टिमिति" मंत्रेण यावद्विलं तावदद्भिः पूरयति
यदीयं भिद्येत पर्जन्यो वर्षिष्यतीति विद्यात्
इयमपि काचन शकुनशास्त्रवत् वर्षसूचना
अथामस्थालीपूरणमंत्रार्थः उच्यते ।
हे मरुत्संघ? दिवः सकाशात् वृष्टिं सृज वह्निदाह
मंतरेण आतपेन शुष्कं इमं समुद्रवत् विशालं
कुंभं समंतात् पूरय

अतः इदं बीजं शरीरेषु यां निक्षिपं कंचन
विशालकुंभं पूरयेति "अदिय स्समुद्रं पृणेति"
मंत्रभागेन मरुत्संघमुद्दिश्य प्रार्थनया भूलोकेजलं
प्रार्थितं भवतीत्यर्थः "सृजा वृष्टिमिति" मंत्रभागेन
स्वर्गेपि जलं प्रार्थितं भवति "दिवः" इतिशब्दबलात्
यागेकृते सति स्वर्गेपि उदकलाभो भविष्यति
तेन किं ज्ञायते? भूलोकयागेपि कुंभे उदकप्रार्थ
नया स्वर्गेपि उदकलाभो भविष्यतीति एतदर्थ
प्रतिपादनायैव श्रुतौ "आभिरेवामू रुन्धेति" इति
इदमद शब्दयोः प्रयोगौ आभिरिति अमूरिति
च श्रूयेते इदंशब्देन भूलोकजलं अदःशब्देन
स्वर्गलोकजलमिति विवेकः।

तत शकटस्य शंकौ कृष्णवर्णां कांचिदविं
"अब्जा असीति" मंत्रेण आबध्नीत अश्वस्याक्रन्द
नेन यथा वृष्टिः पततीत्युक्तं तथैव अस्या अवेरपि
आक्रन्दनेन वृष्टिः भविष्यतीति ज्ञातुं शक्यत्वात्
अस्यामवौ अश्वबुद्धिः कर्तव्येत्यर्थः। एनाम
विं पोक्षेत । मंत्रार्थः हे अवे? त्वं उदकाज्जातासि
कथमवेः उदकाजन्यत्वमितिचेदुच्यते माता

पितृ रेतस: जातासि तच्च रेत: परंपरया उद
कपरिणतमेव अत: उदकजन्यत्वं अवे:। किंच
हे अवे त्वं प्रथमजा असि प्रथमजत्वं नाम किमि
त्यपेक्षायां श्रुति: प्राह पशुप्रतिपादिकां कांचिदुपा
ख्यायिकां "तस्य यत्प्रथमं तमोपाघ्नन् सा कृष्णावि
रभवत्,, इति स्वर्भानुरिति कश्चन आसुर: स्व
र्गलोकगतां प्रभां नुदतीति स्वर्भानु: सच पृथि
व्या: रूपं धृत्वा कृष्णवर्ण: आसीत् तम: पुंजरूपीच
आसीत्

ननु पृथिव्या: कृष्णरूपत्वं कथम्? येन रूपेण
आसुरोपि कृष्णवर्ण: आसीदित्युच्यते इतिचेत्
छन्दोगा: "यत् कृष्णं तदन्नस्य,, इत्यन्नकारण
भूताया: पृथिव्या: कृष्णरूपत्वमामनन्ति अत:
तम: पुंजरूप: स: आसुर: स्वकीयेन तमसा
सूर्यमाच्छाद्य जगदान्ध्यं कृतवान् "यत्वा सूर्य
स्वर्भानुस्तमसा विध्यदासुर:,, इत्येतस्यामृचि
स्पष्टमिदमाम्नातम् तस्य आसुरसंबन्धिन: तम
स: परिहारं विचार्य देवा: नानाविधै: प्रकाशरूपै:
मण्यादिद्रव्यै: चतुर्भि: पर्यायै: तम: अपसारि
तवन्त: प्रथम पर्याये अपगतं च तम: तत् कृष्ण
वर्णा काचित् अविरभूत। द्वितीयपर्याये फल्गुनी
रोहितवर्णा काचित् अविरासीत तृतीयपर्याये
वलक्षी श्वेता काचित् अविरभूत् पर्यायत्रयेपि
प्रकाशरूपमण्यादिभि: तमोनिस्सरणं कृतं चतुर्थ
पर्याये तु कस्यचित् मृतदेहस्य दीप्यमानंपद

रिन्ध तदानीं [illegible] प्रकाशात् तम : अपनीतवन्त : तस्य अपनीतं तम : वन्ध्या काचित् अबि स्नुता एवं रोहा। उत्पन्नास्नु पत सृषु अबिषुणा प्रथम पर्याप्यजन्या सुवर्मानु प्रसारितात् आदित्या ववरकतमो भागात् प्रथममपहृतात् उत्पन्नासीदर्थ:

अपिच हे अश्व त्वं समुद्र सदृशा मेघसंबन्धि यत् बलं वृष्ट्युत्पादन सामर्थ्य रूपं तदसीत्यर्थ:। अश्ववत् त्वपि आक्रान्दन्त्यां सत्यां वृष्टि: भविष्यतीति ज्ञातुं शक्यत्वात् इतिभाव:

तत : उत्करे वर्षाद्रूस्तंबं प्रतिष्ठापयेत् वर्षाहूर्नाम पुनर्नवा इत्यर्थ: छिन्नापि पुन : जायत इति व्युत्पत्त्या पुनर्नवा शब्द : कस्याश्चित् ओषध्या : नामधेयवाचक: (आंध्रभाषायां गलिजेरु)
तां पुनर्नवामोषधीं "उन्नंभयेति" मंत्रेण वृष्ट्यर्थं जुहुयात्

ननु एतस्या : ओषध्या : होमे कथं वृष्टि : भवति? इत्यत्र श्रुतिरेवमाह एषा वर्षाहूरोषधि : ओषधीनां सर्वासां मध्ये वृष्टिं चाकं वर्षं तां बहुल तरसमुदस्यत्वात् अत : इयमोषधि : वर्षदायिनीत्यर्थ:

पुनर्नवा होममंत्रार्थ उच्यते हे पुनर्नवे त्वं पृथिवीं उत्कर्षेण क्लेदय पृथिवी सेचनार्थं दिविभवमिदं आकाशवत् व्याप्तं मेघमंडलं विदारय विदार्य च अन्तरिक्षगतस्य उदकस्य वर्षणं अस्मभ्यं देहि पुनर्नवाया : ओषध्या : उत्पादक हे देव ? त्वमीशा नस्सन् उदकपूर्णं चर्मभस्त्रिका समानं मेघं वर्षणाय विसृष्टद्वारं कुरु इति

"तमाहवनीये अनुप्रहृत्य हिरण्यके ओरजसो।

विसार इति धूममनुमंत्रयते, इति श्रौत
सूत्रकारमाज्ञानुसारं आहवनीये बर्हिर्हस्ताग्रे
हुते सति तस्मादुत्थितं धूमं हिरण्यकेश इत्यादिभिः
चतुर्भिः मंत्रैः अनुमंत्रयते

अनुमंत्रण मंत्रेषु प्रथममंत्रार्थः

अग्नेर्या ज्वाला हिरण्यवर्णा दृश्यते सा तस्याग्निदेव
स्य केशस्थानीया धूमेन सह उत्पद्यते सोऽयं धूमः
पुनर्नवोजन्यः हिरण्यवर्ण सदृश केशस्थानीय
ज्वालया सहोत्पन्नत्वात् हिरण्यकेश इत्युच्यते।

अयं धूमः आकाशस्य यत् रंजकं मेघस्व
रूपमस्ति तत् मेघस्वरूपं प्रसारयितुं गच्छतीत्यर्थः
आकाशे मेघाभावे आकाशस्य रंजनं न भवती
त्यर्थः। अपि चास्य धूमस्य वायुतौल्यमस्ति वायुः
यथा कंपमानः शीघ्रगतियुक्तः तद्वदयं धूमोपीति
भावः। अयं धूमः मेघरूपेण परिणतोपि निर्मल
दीप्तिरेव भवति। मेघस्य मलिन वर्णत्वेपि विद्युद्
यथा दीप्यते। एकत्वेन निर्मल दीप्तिरेव भवतीत्यर्थः
एतादृशोऽयं धूमः अस्मदर्थं वृष्टिमुत्पादयतु
इति शेषः। प्रभातकालीयः प्रकाशः सः मेघैः
आवृतश्चेत् नश्यते सूर्यदीप्तिः यथा नश्येत
तादृशमेघसमृद्धिः अस्माकमस्तु इत्यर्थः।
यास्तु सस्यनिष्पादिकाः भूमयः सन्ति ताः सस्य
निष्पादनेन इमाः उत्तमभूमयः इति कीर्तिभाजो भव
न्तु। किंच एताः भूमयः उदकाग्निलाजिन्यो भूत्वा
सस्योत्पत्तौ अमोघाः समर्था भवन्तु सुक्षेत्रा इति कीर्ति

याजश्च भवन्, एतास्यां भूमौ तां हे अनुद्वाप
पुनर्नवाजन्योधूमः वृष्टिं जनयतु इत्यर्थः।

द्वितीयमंत्रार्थः
हे पुनर्नवे ओषधे? तव संबन्धिनो धूमाः पक्षिवत्
उत्पतनशीलाः पुनः पुनः गमनैः समंतात् इदं
प्राप्तवन्तः ततः मेघदशां प्राप्नुवन्ति हे ओषधे?
तव धूमः नीलवर्णः मेघो भूत्वा सेचन समर्थः
वृषभ इव भूत्वा पुनः पुनः गर्जनम करोत्। यस्मिन्
काले इदं सर्वं प्रवर्तते तदा अयं मेघः अनुगद्भुका
भिः हसन्तीभिरिव विद्यमानाभिः वृष्टिभिः
युक्तः आकाशादागच्छति। अनन्तरं वृष्टिधा
राः पतन्ति मेघाः गर्जन्ति च ईदृश महिमोपेतः
पुनर्नवाधूमइत्यर्थः

तृतीयमंत्रार्थः पूर्वमंत्रे प्र~~क्त~~युक्तायेमरुतः
तएवात्र इदं शब्देन परामृश्यन्ते एषां मरुतां संबन्धि
नी या वृष्टिः यदा सृष्टा भवति तदा गर्जनसहिता
विद्युत् मरुतः प्रति शब्दं कुर्वतीव प्रतिभाति मरु
द्भिस्सह संबध्यत इत्यर्थः। अत्र दृष्टान्तः कश्चन
उच्यते गौः वत्सं प्रति हुंभारवं कुर्वाणा यथा मनु
ष्यैरवलोक्यते तद्वदियं विद्युदपि संपद्यते
इत्यर्थः।

चतुर्थमंत्रार्थः हे मरुतः यूयं बलाप्युक्तवन्तः
कथं? यदा क्रीडां कुरुथ तदानीं युष्माकं गर्जने
सति पर्वतोऽपि बिभेति कीदृशः पर्वतः? इति चेत्
तिर्यक् प्रमाणेन अत्यन्तं महान् ऊर्ध्वप्रमाणेन
वृद्धश्च। किंच उन्नत लेन दिवोप्युपरि वर्तमानः

तादृशोपि विमतो(पि)ष ।। हेमरुतः स्ववतांगर्जनेसति प्रौढोपि पर्वतसानुः कंपते । हेमरुतः आप्लुवन्तेद्याप: आप्लुव्याप्तौ इतिधातोः निष्पन्नः अपशब्दः । आपः यथा व्याप्ताः तथा व्यपकास्सन्तः क्रीडन्तश्च यावदवम् एतादृशसामर्थ्योपेतैः मरुद्भिः पूकः अयं पुनर्नवाजन्यधूमः वृष्टिमुत्पादयतु इतिमंत्राणां तात्पर्यार्थः ।

अनन्तरं "ये देवादिविभागा" इतिमंत्रेण आहवनीयाग्ने: उपरि कृष्णाजिनं कंपयेत्

कृष्णाजिन कंपन मंत्रार्थः ये दिविभागाः ये अन्तरिक्षभागाः ये पृथिविभागाः इतिमंत्रकथनेन लोकत्रयभाजो ये देवास्सन्ति ते प्रथमतः अस्मदीयं कारीरेष्ट्याख्यं यज्ञं प्रविश्य ततः सस्यनिष्पादकं क्षेत्रं सामान्येन आविश्य तदनन्तरं प्रतिक्षेत्रमपि विशेषेण प्रविशन्तु इतिप्रार्थनया यागकर्तुः लोकाः प्रीतास्सन्तः यजमानाय अभीष्टप्रदा भवन्ति ।

त्रिषुदिनेष्वपि सक्तुबंधनेकृतेपि वृष्ट्यभावपक्षे चतुर्थे अहनि धामच्छदादीनि त्रीणि हवींषि निर्वपेत् इति

कल्पसूत्रकृताम् महर्षीणां प्रयोगक्रमः

"अग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेत् मारु तं सप्तकपालं सौर्यमेककपालमिति श्रुत्या प्रथमस्य अष्टाकपालपुरोडाशस्य हविषः धामच्छदग्निः देवता द्वितीयस्य सप्तकपालपुरोडाशस्य हविषः मरुतः देवता तृतीयस्य एककपालपुरोडाशस्य हविषः सूर्यः देवता अत्र धामच्छदिति अग्नेः विशेषणं कथं संपन्नमिति अत्र धामच्छदिति अग्नेः विशेषणं कथं संपन्नमिति

अत्र धामच्छदिति अग्नेः विशेषणं कथं संपन्नमिति अत्र याज्यामंत्रे "धामाहृ येत् अस्यपुरोडाशस्य यागे याज्यामंत्रे "धामाहृ

येत् अस्यपुरोडाशस्य यागे याज्यामंत्रे "धामाहृ येत्, इति धामशब्दः अस्ति अनुवाक्यामंत्रे

" अमृतस्य धाम" इति धाम शब्दोपेत याज्यानुवाक्ययोः धाम शब्दोपेतत्वात् अग्निः धामच्छत्। तदर्थस्तु धामानि अस्मद्गृहादीनि अंधकारापादिकया वृष्ट्या आच्छादयतीति धामच्छत् तस्मै निर्वापः कर्तव्यः। बहूनां देवानां सत्वेपि वृष्टि संपादने अग्निमरुदादित्या नां त्रयाणामेव प्राधान्य मस्तीति तेभ्य एव हविर्निर्वापः क्रियते कथं तेषां प्राधान्यमितिचेत् " अग्निर्वा इतोवृष्टिमुदीरयति" इति श्रुत्यनुगृहीतात् " अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिरिति" स्मृतिवाक्यात् अग्निः अस्मात् लोकात् स्वस्मिन् निक्षिप्तां आहुतिं आदित्यं प्रापयति तद्द्वारा वृष्टिमुत्पादयतीति अग्निसामर्थ्यं " मरुतस्सृष्टां नयन्ति" इति श्रुतिवाक्यात् तथा उत्पन्नां वृष्टिं मरुद्देवताः ततस्ततनयन्ति इति मरुद्देवतानां वृष्टौ स्वकर्तव्यनिर्वाहः। असौ आदित्यः यस्मिन्काले तीव्रैः रश्मिभिः अतिशयेन संतापं करोति तदा पर्जन्यद्वारा वर्षति रश्मिषु यत्कमुदकं पर्जन्यः स्रावयतीत्यर्थः। आदित्यः एवं वर्षन् गृहादीनि धामानि आच्छादयन्निव बहुलं भेघयुक्तो भूत्वा वर्षतीति आदित्यस्यापि वृष्टौ प्रयत्न विशेषः। एवमेतेषां अग्निमरुदादित्यानां वृष्ट्युत्पादने सामर्थ्यं बोध्यं। तैः हविर्भिः ताः देवताः तुष्टास्सत्यः पर्जन्यं यजमानार्थं वर्षयन्ति यद्यपि पर्जन्यः स्वयमेव अवर्षिष्यन्निव पूर्वं स्थित स्तथापि एताभिः देवताभिः प्रेरितस्सन् क्षण मात्रेण पुरोवातादि सामग्रीं संपाद्य सर्वथा वर्षिष्येवेति भावः।

## सामिधेनीनां महिमा



"अग्न्यादित्ययोः भूस्वर्गलोकस्थापनं"
"आर्द्रकाष्ठे अग्न्युत्पादनं च"

— × —

दर्शपूर्णमासयागप्रकरणे सामिधेनीमंत्राः "पंचदश सामिधेनीः" इति श्रुत्या पंचदश सन्तीति ज्ञायते। तथापि मंत्रकांडे एकादशैव पठितास्सन्ति। तथापि तासु सामिधेनीषु प्रथमोत्तमयोः त्रिरावृत्त्या पंचदशत्व संपत्तिः भवति। एते मंत्राः अतीन्द्रियज्ञाननिधयः एतेषां मंत्राणां महिमा अनूह्यः। तथाहि, दर्शपूर्णमासयागे सामानि न सन्ति सामगानरहितश्चेत् सः भूरन्ययज्ञो न भवति। अतः दर्शपूर्णमासयागेपि सामसम्पत्त्यर्थं मंत्रत्रयं पठ्यते। "अग्न आयाहि" "तं त्वा समिद्भिरंगिरः" "बृहदग्ने सुवीर्यम्" इति सामिधेनीमंत्रत्रयं मिलित्वा तृचमिति नाम्ना व्यवह्रियते। इदं मंत्रत्रयं सामत्रयस्वरूपं बोध्यं। यद्यप्येताः तिस्रोपि ऋच एव कथमासां सामत्वव्यवहारः? इति शंकायाम् स्तुतिपरत्वात् सामरूपत्वमविरुद्धं। यद्वा शाखान्तरे एतासु ऋक्षु सामानि गीतानि अतः आसां सामत्वं ज्ञेयम्। अस्मिन् तृचे आद्यन्तमंत्रयोः महिमा वर्ण्यते

पुरा स्वर्गलोके अग्निः स्थितः किल आदित्यस्तु भूलोके। तदानीं लोकद्वयमशान्तमासीत्। किमर्थमिति चेत् स्वर्गे हि अमृतसेविनां देवानां पाकापेक्षा नास्ति प्रकाशाय केवलं आदित्यः अपेक्षितः। भूलोकवासिनां तु पाकः मुख्यः प्रयोजनं। अग्न्यभावे पाकः न सिध्यति येषां मनुष्याणाम् यस्याग्नेरपेक्षास्ति सः अग्निः भूलोके नासीत् इति एको दोषः भूलोकात् अग्निद्वारा देवतानां प्राप्तव्यहविषामलाभः इत्यपरो दोषः

स्वर्गवासिनां अग्नेः स्वर्गे स्थितेः प्रयोजनं नास्ति
नित्यममृतपायित्वात् देवानाम्। किंच आदित्यः भूलोके
अस्ति चेत् तस्य किरणौष्ण्यं नकोपि सोढुं शक्नोति
देवास्तु नान्ये अस्मदपेक्षया अधिकमहिमवत्वात् सोढुं
सामर्थ्यमस्ति देवेषुमध्ये सूर्योपि एको देवः।
एवं रीत्या भूलोके आदित्यस्य स्वर्गलोके अग्नेश्च
स्थितौ उभयोर्लोकयोरपि शान्तिः नास्ति क्षोभएव। तं क्षोभं दृष्ट्वा ते देवाः परस्परमिदमूचुः।
इमौ अग्न्यादित्यौ विपरिवृत्तौ स्थापयाम। तथाकर्तुं
यूयं सर्वे समागच्छत इति। अग्न्यादित्ययोः पूर्वं स्वर्ग
भूलोक वासिनोः विपरिवर्तनेन भूलोकस्वर्गलोकयोः
स्थापने कः उपायः ? इत्यालोच्य सामिधेनीमंत्रेषु
यः तृचः अस्ति तस्मिन तृचे प्रथमोत्तमयोः मंत्रयोः
उच्चारण प्रभावएव। तथाहि तेषु त्रिषुमंत्रेषु "अग्न आ
याहीति प्रथमो मंत्रः अस्यायमर्थः हे अग्ने देवेभ्यः
यागकर्ता हविर्दास्यति तत् देवैः भक्षणीयं भवति।
इमं विषयं देवेभ्यः [illegible] तानाहूय आगच्छ मदीय
यज्ञे उपविश इति। "अत्रागच्छ," "मदीययज्ञे उपविश,"
इतिमंत्रलिंगात् भूलोकंप्रति आगमनाय आह्वानं
श्रूयते आगत्यापि स्थिरतया उपवेशनंप्रार्थ्यते
अतः अग्नेः भूलोके स्थापनं युक्तमेव। किंच
लोकतयगणनायां प्राथम्यं भूलोकस्यभवति।
तथामंत्रतयगणनायां प्राथम्यं "अग्न आयाहीति,"
मंत्रस्यैवभवति अस्मिन मंत्रे "आयाहि," "बर्हिषि
निषीद," इतिभूलोकस्थापकलिंगान्यपि सन्ति।
अतः अग्नेः भूलोकस्थापनं कृतमित्यर्थः।

आदित्यस्य स्वर्गलोकस्थापन अस्मिन् तृचे "सनः पृथुः" इति तृतीयमंत्रेण क्रियते तत्कथमिति चेत् उच्यते मंत्रार्थः सूक्ष्मेक्षिकया परिशीलनीयः तथाहि हे अग्ने? देव? त्वं अस्मदर्थं विस्तीर्णं देवैः श्रोतुमिदं कर्म अभिमुखीकृत्य सवीर्यं यथा भवति तथा प्रकाशय। अस्यामृचि बृहच्छब्दः सुवीर्यशब्दश्च द्रष्टव्यः। बृहच्छब्देन ज्वालाधिक्यं गम्यते सुवीर्यशब्देन स्वस्मिन् प्रक्षिप्यमाणस्य हविषः सम्यक् दहनसामर्थ्यमुक्तं।

ननु इयमपि ऋक् अग्निप्रतिपादिकैव दृश्यते अस्यामृचि आदित्यप्रसक्तिरेव नास्ति अनया ऋचा कथं आदित्यस्य स्वर्गलोकेस्थापनं संगच्छते इति शंका त्वां समाधीयते। यद्यपि अस्मिन् मंत्रे आदित्यः न श्रूयते तथापि विवासति इत्येकं पदमस्ति तस्य पदस्य विभातार्थकत्वमुक्तं तत्र उच्चैस्थानवृत्तित्वकारित्वं। तेन उच्चैस्थानवृत्तित्वकारित्वेन विभातत्वेन आदित्यः श्रूयते। किंच अस्या ऋचः तृतीयत्वात् आदित्यस्य तृतीयलोके स्थापनहेतुत्वं गम्यते पृथिवीतः गणनायां स्वर्गलोकस्य तृतीयलोकत्वात्। "अपिच हंसः शुचिषत्" इति हंसमंत्रावसाने "ऋतं बृहत्" इत्यादित्यमंडलपरत्वेन श्रुतः बृहच्छब्दः अस्य मंत्रस्य "बृहदग्ने सुवीर्यमिति" चरमभागे श्रूयते। सः बृहच्छब्दः आदित्यस्य प्रत्यभिज्ञापकः तस्मात् "सनः पृथु श्रवाय्यमिति" तृचस्य तृतीयमंत्रेण पृथिवीतः गणनायां तृतीये स्वर्गलोके आदित्यस्य स्थाप-

नं सिद्ध्यति ... एवं अग्न्यादित्ययोः स्वर्ग पृथिवीलोक वासिनोः विपर्यावृत्या पृथिवी स्वर्गलोकयोः स्थापनात् द्युलोके स्थापितात् अग्नेः पाकादि सिद्धिः द्युलोकात् अग्नौ हविस्समर्पणद्वारा देवतातृप्तिश्च एवं प्रयोजनानि सिध्यन्ति । स्वर्गलोके स्थापितात् आदित्यात् यत् पूर्वं भूलोके संतापाधिक्य प्रयुक्तं दुःखं तन्निवृत्तिलाभः उभयलोक प्रकाशसिद्धिश्च एतानि प्रयोजनानि सिद्धानि ।

एवं अग्न्यादित्ययोः विपरिवर्तनेन उभयलोक शान्तिः सामिधेनी मंत्रप्रभावात् संपन्ना इति सामिधेनी मंत्राः महामहिमोपेताः अतोऽन्द्रिय ज्ञान निधयः इति स्पष्टमवगम्यते । एतावता सामिधेनी मंत्रेषु कश्चन तृचः उक्तः तस्मिन् तृचे आद्यन्त मंत्रयोः माहात्म्यमुक्तं ।

अधुना मध्यमायाः ऋचः माहात्म्यमुच्यते तथाहि यज्ञे बहवः ऋत्विजः सन्ति तेषु नृमेध परुच्छेप नामानौ द्वौ मुनी ऋत्विजौ स्तः तौ परस्परमेवं मंत्र सामर्थ्य विषयं वादमकुरुताम् । अत्र अनयोरियं प्रतिज्ञा आवयोरुभयोर्मध्ये यतरः सामिधेनीमंत्रे अत्यन्तं कुशलः? तादृशं विषयं निश्चेतुं स्वमनसि सामिधेनीमंत्रं अनुस्मरन्तौ आवां अस्मिन् आर्द्रे काष्ठे मथनेन अग्निं जनयावेति प्रतिज्ञां चक्रतुः । ततः तयोः नृमेधनामको महर्षिः प्रथमतः आर्द्र काष्ठमुद्दिश्य "तं त्वा समिद्भिः," रित्यादिकं सामिधेनीमंत्रमवदत् । सः मुनिः

तन्मंत्रोच्चारण सामर्थ्यात् धूममेवोत्पादितवान्
ततः परुच्छेद नामको महर्षिरपि आर्द्रकाष्ठमुद्दि
श्य तमेवमंत्रं पठित्वा तत्पाठसामर्थ्येन अग्निमजनयत्
तदनन्तरं नृमेधः परुच्छेपं प्रति एवं हे परुच्छेप?
मुने? त्वं अतीन्द्रियद्रष्टासि इति संबोध्य प्रशशंस।
ततः एवं पप्रच्छ हे मुने? यद्यपि आवयोः सामि
धेनीमंत्रज्ञानं समानमेव तथापि त्वं आर्द्रकाष्ठे
मंत्रमुच्चार्य अग्निमुत्पादितवानसि अहं तथा नकृत
वानस्मि तत्कारणं किं? इति। ततः परुच्छेपः नृमे
धंप्रति एवं प्रत्युत्तरमुवाच हे नृमेध? यद्यप्याव
योः सामिधेनीपाठः तदर्थज्ञानं च समानमेव।
तथापि अहं तेजः सामिधेनीमंत्राणां तेजो जानामि
अत तेज इशब्दार्थः रहस्यमित्यर्थः मंत्ररहस्यं जाना
मीति परुच्छेपसमाधानं। किंच नृमेध? मंत्ररहस्यं त्वं
न वेत्सि अतएव त्वं धूममेवोत्पादितवानसि इति परु
च्छेपसमाधानं। ततः नृमेधः पुनरेवं परुच्छेपं पप्र
च्छ। हे परुच्छेप? "त्वं त्वा समिद्भिरंगिरः" इति
सामिधेनीमंत्रस्य तत्तेजः किं? इति नृमेधप्रश्नस्य
परुच्छेपः एवं समादधौ। घृतशब्दोपेतः पादः अनू
च्यत इति शेषमनुच्यमानः पादः सामिधेनीनां सारं भूतं
तेजः स पादः कस्यामृचि वर्तत इति चेत् "त्वं त्वा समि
द्भिरंगिरः" इत्यस्यामृच्यस्ति। तस्यामृचि "घृतेन वर्ध
यामसि" इति पादो वर्तते। तामृचं पठेत् अस्याः ऋचः
अयमर्थः। हे अग्ने देवानामाह्वातारं त्वां समिद्भिः
घृतेन च वर्धयामः। हे ध्रुवतम? अग्ने? ज्वालाभिवर्ध

यथा भवति तथा द्रोणस्य इति विद्यारण्य भाष्यविवरणं

हे मुने ! घृतवत्पद घटित सामिधेनीमंत्रपाद: तत्वज्ञान पूर्वकं पठितस्सन् सामिधेनीमध्ये ज्योतिर्जनक इति तस्य तत्वमहं जानामि अतएव तन्महिमानं ज्ञात्वा स: मंत्रपाठ: मया कृत : त्वं तं पादं पठन्नपि तन्महिमानं न जानासि अत : आर्द्र काष्ठे अग्निं नोत्पादितवानसि किंतु धूममेवोत्पादितवानसि । अहं तु तन्महिमानं जानामि अतएव आर्द्रकाष्ठे अग्निमुत्पादितवानस्मि केवलपाठापेक्षया पदपदार्थज्ञानापेक्षया च तत्वज्ञान मावश्यकं तत्वज्ञानमहिमानं श्रुति: साक्षात् एवं बोधयामास । अन्यच्च सामिधेनीमंत्राणां संप्रदाय शुद्धि माह श्रुति: 'ऋषे र् ऋषेर्वा एतानि र्निर्मिता, इति ऋषिर्नाम अतीन्द्रियस्य द्रष्टा तादृश: ऋषि : एकैकां सामिधेनीं ईश्वरानुग्रहेण दृष्ट्वा तत्संप्रदायपरंपरां निर्मितवान

ननु अस्य महतो भूतस्य निश्वसितमेतद् ऋग्वेद , इत्यादिका श्रुति: वेदानां परमेश्वरात् निश्वासवदप्रयत्नेन आविर्भाव माह श्रुति: अत ऋषि: सामिधेनीमंत्रद्रष्टा इत्युच्यते तत्कथं संगच्छते ? इतिचेदुच्यते उभयमपि सत्यमेव "यो ब्रह्माणं विदधाति ," "युगान्ते अन्तर्हितान् वेदान् ,, इत्यादि श्रुतिस्मृति पर्यालोचनं कर्तव्यं प्रलयकाले परमेश्वरेलीनस्य सर्वस्यापि पुन: सृष्ट्यादौ आविर्भावे वेदानामाविर्भाव: निश्वासवदप्रयत्नेन भवति । तेच वेदा : प्रथमस्रष्टाय ब्रह्मणे परमेश्वरेण स्मारिता: तथैव मुनिभ्योपि । तत्कथमितिचेत् ब्रह्मानुगृहीता महर्षय: तप: कृत्वा तत्प्रभावात् प्रलय काले परमात्मनि अन्तर्हितान् वेदान् सेतिहासान् लेभिरे तथा च परमात्मन : आविर्भूतानां वेदानां प्रवर्तका: ऋषय: इत्यर्थ: तादृश : सामिधेनीमंत्रा : सर्वाभीष्टप्रदा इति रहस्यम्-

# वेदेषु वैद्यविषये अपूर्वविधानम्

लोके आमयाविनः स्वीय रुक्प्रतिक्रियार्थं भिषजां समीपं प्रतियान्ति । भिषजः यथाविज्ञानं तेषां चिकित्सां कुर्वन्ति केचन रोगिणः गदान्निर्गता भवन्ति । अपरे केचन आमया ऽव सन्ति । तत् किं कारणमिति काचन चिंता कार्या भवति । कृष्णयजुर्वेदसंहितायामेवं श्रूयते ।

"यज्ञस्य शिरोच्छिद्यत ते देवा अश्विनावब्रुवन् . . . .
. . . . . . . . . . . . . . . . . यज्ञस्य निष्कृतौ स्थः कृ.य.सं ६-४-९

लौकिकभिषजां अश्विदेवतानुग्रहः अत्यन्तमावश्यकः यतो हि तौ देवभिषजौ । तौ कदाचित् केनचित् कारणेन छिन्नं यज्ञपुरुषशिरः देवतानां प्रार्थनया संधाय यज्ञपुरुषं सांगमकुरुतां ततो देवाः सांगयज्ञपुरुषानुष्ठानेन उत्तमलोकप्राप्तिरूपं फलमवापुः । यज्ञपुरुषशिरस्संधानार्थं अश्विनौ देवान् वरं वृतवन्तौ किमिति ? "आवयोरस्सोदरयोरपि सोमयागे सोमरसलाभोस्तु" इति अत्र "अश्विनौ इति शब्दः" प्रशस्ताः अश्वाः अनयोः सन्ति" इतिवा "अश्वारूढत्वात्" "अश्विनी नक्षत्रे जातत्वात्" "अश्वरूपधारिण्याः सूर्यभार्यायाः संज्ञानाम्न्याः सुतौ" इतिवा व्युत्पादितः ।

ततस्ते देवाः औ अश्विनौ युवां यतो भिषजौ भवन्तौ चिकित्सारूपेण मनुष्यव्यापारित्वेन युक्तत्वात् अपूतौ । भूलोकेऽपि रोगप्रतिक्रियार्थं मानुषरूपेण आगत्य मानवानाम् रोगनिवृत्तिं अकुरुतामिति कथाः श्रूयन्ते । अतः भवद्भ्यां अपूतत्वकारणेन अस्माभिस्समान गौरवं दातुमयुक्तं । यद्यपि यागकालेषु यस्य पुरोडाशस्य यावन्ति कपालानि

विहितानि तावन्ति कपालानि अपि भाव्यमिति श्रौतनि
यम : तेषु कपालेषु यद्येकमपि कपालं नश्येत् तर्हि
यागकर्तुः यजमानस्य यावदायुः तस्मिन् एकस्य
मासस्य न्यूनता स्यात् पर्याप्तायुषि एकमासात् प्रागेव
यजमानो म्रियेतेत्यर्थः । एवमेव द्विकपालादि नाशेऽपि
द्वित्रिमासेऽस्य : पूर्वमेव यजमानस्य आयुषः समाप्तिः
स्यात् अतः यजमानस्य रक्षणार्थं कपालानामुद्वा
सनकाले गणना कर्तव्या । कपाल नाश दोषप्रायश्चि
त्तार्थं अश्विदेवताप्रीत्यर्थं द्विकपाल पुरोडाशनिर्वापः
कर्तव्य इति " यद्येकं कपालं नश्येत् ..... .....
..... निर्वपेत् ," इति श्रुतिः कृ . य . सं २-६-३
बोधयति । यताश्विनौ भिषजौ तयोः प्रीतिः यस्य
स्माभिः संपादिता भवति तदा तौ यजमानस्य आ
युषः न्यूनता यथा न स्यात् तथा करिष्यतः अतः
अश्विनावुद्दिश्य यत् द्विकपाल पुरोडाशदानं तत्
यजमानस्य अश्विदेवताद्वारा औषधसमर्पणमेव
भवतीति एवमिष्टिषु अश्विदेवतयोः संबन्ध उक्तः
तथा पशुयागेऽपि अनयोस्संबन्धोऽस्ति । तथाहि
वेदाध्ययन यज्ञानुष्ठाने यस्य पुरुषस्य त्रिपूरुषं विच्छि
द्यते सः दुर्ब्राह्मण इति ब्रह्मवादिभिः गर्हितः तादृ
शस्य पुरुषस्य सोमपान वाञ्छा यदि स्यात् तेन पुंसा
दौर्ब्राह्मण्यप्रायश्चित्ततया अश्विदेवतोद्देशेन धूम्रल
लामपशुयागः कर्तव्य इति " आश्विनं धूम्रललला
ममालभेत ..... पिपासेत् ," कृ . य . सं २-१-१०
इति श्रुत्या बोधितः एवं इष्टिपशुयागेषु हविस्संब
न्धस्य भवतोरुभयोरस्यैव इति देवानां समाधानं

निशम्य पुनरेव अश्विनौ पप्रच्छतुः यज्ञप्र ज्यावयोः भवदुक्तरीत्या इष्टिपशुयागयोरस्ति हविर्लाभः तथापि अग्निष्टोमे पूर्वं हविर्लाभः नास्ति तदर्थं आवाभ्यां प्रार्थ्यन्ते इति उक्त्वा पुनरपि एवमूचतुः हे देवाः अग्निहोत्रानुष्ठानकाले "प्राचीनावीती। स्वधापितृभ्यः पितॄन्जिन्व। दक्षिणेन वेदिं भूम्यां लेपं निमृज्य" इति श्रौतमर्यादानुसारं पितृदेवतोद्देशेन वेदिदक्षिणभागे अग्निहोत्रहुतशेषभागः यः स्तोकपदार्थः लेपः दीयते तथा लेपदानादिना नावयोः परितोषः। किंतु सोमलाभेनैवेत्यूचतुः।

तदनन्तरं देवाः हे अश्विनौ ? यदि भवतोः सोमयागेऽपि यं बन्धाग्रहः तर्हि बहिष्पवमानस्तोत्रेण भवन्तौ पावयित्वा पश्चात् भवन्तावुद्दिश्य ग्रहपात्रे सोमरसं दास्यामः इत्यूचुः बहिष्पवमानस्तोत्रं नाम छन्दोगानां उत्तराग्रन्थोपक्रमे सूक्तत्रयं "उपास्मै गायता नरः" इत्यादिकमाम्नातं तच्च गायत्रसाम्ना गातव्यं तदिदं बहिष्पवमानस्तोत्रमिति भाष्ये श्रीविद्यारण्य स्वामिपादाः बभणुः। तेन बहिष्पवमानस्तोत्रेण शुध्यौ कृत्वा तदनन्तरमेव आश्विनग्रहणं कर्तव्यमासीत् एवं कृतं चेत् यज्ञस्वरूपं संपादितं भवति।

अत किंचित् प्रासंगिकमुच्यते यतः अश्विनौ चिकित्सारूपेण मनुष्यचारित्र्येण युक्तत्वात् अपूतौ इत्युक्तं चिकित्सायां मलमांसमूत्रादिपरीक्षा कर्तव्या भवति तत्सर्वं अपवित्रता कारणम्

अतएव अनयोः अश्विनोः यज्ञेषु हविस्स्वीका
रयोग्यता नासीत् अतः ब्राह्मणेन अँयज्यं नका
र्यं यतोभिषक् अपवित्तः

श्लो.. उत्तमांगोद्भवात् ज्यैष्ठ्यात् ब्रह्मणश्चैवधारणात्
सर्वस्यैवास्य सर्गस्य धर्मतोब्राह्मणः प्रभुः,, इति
"संस्कारस्य विशेषात्तु वर्णानां ब्राह्मणः प्रभुः,, इतिच
मनुस्मृतौ ब्राह्मणः मुखोद्भवात् क्षत्रियादिभ्यः पू
र्वोत्पन्नत्वात् अध्यापनव्याख्यानादिना अतिशयेन
वेदधारणात् सर्वस्य जगतः धर्मशासकत्वात् वर्णेषु
विशिष्टसंस्कारवत्वाच्च ब्राह्मणः प्रभुरिति व्या
ख्यातो कुल्लूकभट्टेन प्रोक्तं अतः अवश्यं ब्राह्मणः
रक्षणीयो भवति। अतः अपवित्रता संपादकं अँ
यज्यं ब्राह्मणेन नकार्यमित्यर्थः तादृशापवित्रतादोष
निवारकं यागयोग्यता संपादकंच बहिष्पवमान
स्तोत्रमिति जानता पुरुषेण यज्ञेषु बहिष्पवमानस्तो
त्रं कर्तव्यं तथाकृतं सत् आत्मानं पवयते। तत्रबहि
ष्पवमानस्तोत्र पठनसमये कल्पसूत्रकारा महर्षयः
एवमभिप्रयन्ति

" उदञ्चः प्रह्वाः बहिष्पवमानाय पञ्चर्त्विजः सम
न्वारब्धा सर्पन्ति अध्वर्युं प्रस्तोतान्वारभेत प्रस्तोतारं
प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यज
मानः,, इति

प्रातस्सवने बहिष्पवमानेन स्तोष्यमाणाः ऋत्विजः
आत्वालाद्याः बहिः उदङ्मुखाः नतकायाः सन्तः प्रसर्पन्ति

ते अन्वारब्धतया गच्छन्ति एकस्य पृष्ठत: अन्य: इत्येवं पिपीलिकावत् पङ्क्त्याकारेण गन्तव्यम्. तत्पुर तोगन्तु: कच्छं गृहीत्वैव पृष्ठत: अन्य: गच्छेत् एवं रीत्या अध्वर्युमनुसृत्य प्रस्तोत्रादय: ऋत्विज: यजमानश्च बहिष्पवमान स्तोत्रार्थं तत्रगता इत्यर्थ: एवंकृतेनबहिष्पवमानस्तोत्रेण अश्विनौ शुद्धौ कृतौ ततस्सोमभागे देवा: आश्विनं ग्रहमगृह्णन् इति बोध्यम्।

अत्र कश्चन अदृष्टविशेष: उच्यते श्रुत्या "तयोस्त्रेधार्त्तिज्यं विन्यदधु ........ तृतीयमिति," कृ.य. तै.स. कं ६. प्र. ४ - अ. ९.

देवतानां महामहिमोपेतत्वात् रोगनिवर्तकत्वशक्ति: वर्तते देवतासु। ब्राह्मणोपि "यावतीर्वै देवतास्तास्स र्वा वेदविदि ब्राह्मणेवसन्ति," इति श्रुत्या सर्वदेवता स्वरूपएव ब्राह्मणे मंत्रप्रभावात् रोगनिवर्तकत्व शक्तिरस्ति स्नानपानादिना उदके रोगनिवर्ती कत्व शक्तिरस्ति अग्निरपि सर्वदेवतास्वरूपएव। रोगनिवृत्यर्थं अग्नौयो होम: क्रियते तद्द्वारा अग्ने रपि सर्वरोगनिवर्तकत्वशक्तिरस्ति। एवं अग्नौ, अप्सु, ब्राह्मणेच याशक्तिरस्ति रोगनिवर्तने साशक्ति: अश्विनो: देवै: निक्षिप्ता अतएव अश्विदेवतयो: अनुग्रह: लौकिकभिषजामा वश्यक: स: अनुग्रह: कथं लभ्यते इतिचेत् श्रुतिरेवं ज्ञापयति "तस्मादुदपात्रमुपनिधाय ब्राह्मणं दक्षिणतोनिषाद्य भेषजं कुर्यात्,"... इति

लौकिकोऽभिषक् अश्विदेवतानुग्रहार्थं उदकुंभं समीपे निधाय कंचन ब्राह्मणं दक्षिणतः उपवेश्य अग्निं चोपसमिध्य रुक्प्रतिक्रियां कुर्यात् अग्निजल ब्राह्मणेषु अदृष्टद्वारेण उपकारकं यत् मैत्रज्यमस्ति किंतत् ? रोगनिवर्तकत्व शक्तिरेव तस्या अश्विनोः सत्वात् तस्यभिषजः अश्विदेवतानुग्रहः भविष्यति तथाकृता चिकित्सा फलवती स्यात्। अतएवम् रोग निवृत्तिश्च भवेत्। वैद्यैः एवंचिकित्सायां कृतायां आमयाविनः गदान्निर्गतानभवेयुरितिन। अतएव भवेयुरेवेतिभावः।

## वैद्यविषये अन्याकाचन अपूर्वप्रक्रिया

यथा लोके स्त्री पुरुषरूपेण भिषजः द्विविधाः दृश्यन्ते तथा वेदेपि स्त्रीपुरुषोभयरूपेण द्विविधाः श्रूयन्ते यद्यपि लोके ओषधिरसविकारात्मकैः औषधैरिव तथा शास्त्रैरपि रुक्प्रतिक्रिया अनुभूयमानादृश्यते तथापिवेदेषु एतद्विलक्षणतया अश्विन्यादि देवतानांचिकित्सा ओषधि सदृशैः पशुवधयज्ञैः ओषधिविशेषैश्च भवतीति वेदेषु श्रूयते। सौत्रामणिरिति कश्चनयागविशेषः अस्ति। तस्मिन् यागे "सीसेन तंतमित्यादिमंत्रैः पशुवधव होमेन यज्ञनिष्पत्तिद्वारा इन्द्रदेहः निरूप्यते।

अत इन्द्रशरीरोत्पत्तिर्नाम यागोत्पत्तिरेव याग स्य इन्द्र स्वरूपत्वात् इन्द्रस्य विष्णुरूपत्वात् "यज्ञोवै विष्णुरिति, श्रुतेः यज्ञस्य विष्णुरूपत्वमेव।

यागे अस्मिन् एतादृश होमद्वारा यागफलभूतं इन्द्रसदृशं शरीरं यजमानाय अश्विन्यादि देवताः संपादयन्तीत्यर्थः।

अत्र प्रथमो मंत्रः "सीसेन तन्त्रं मनसा मनीषिणः ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञं सविता सरस्वती। इन्द्रस्य रूपं वरुणो भिषज्यन्" इति कृ.य.तै.ब्रा.का. 2-प्र.6-अ.4.

अस्मिन् मंत्रे अश्विनौ देवौ, सवितृदेवः, सरस्वती, वरुणश्च, एते देवाः उच्यन्ते। लोके यथा केचित् अविपालकाः ऊर्णासूत्रेण कंबलं वयन्ति। तथा अह्ययोः कुशलाः शास्त्राभिज्ञाः ऋत्विजोऽपि सर्वं सौत्रामणि कर्मप्रयोगं स्वमनसा विचार्य सीसादि द्रव्य क्रीतेन व्रीह्यंकुरादि द्रव्येण सौत्रामणि यज्ञाख्यं दीर्घतंत्ररूपं क्रियाकलापं विस्तरेण निष्पादयन्ति

ननु अस्यां सौत्रामण्यां उपयुक्त व्रीह्यंकुरादीनाम् सीसादि द्रव्य क्रीतत्वं किमर्थं? इत्यत्र श्रुतिरेवमाह "सीसेन क्लीबाच्छष्पाणि क्रीणाति" इत्यादिना "यत्सौत्रामणी समृद्ध्यै" इत्यन्तेन कृ.य.तै.ब्रा.का.1-प्र.8-अ.5

सीसं अयसः अधिकं हिरण्यात्तु न्यूनं। क्लीबोऽपि स्त्रियाः अधिकः पुरुषात्तु न्यूनः। शष्पाण्यपि = व्रीह्यंकुरात्मक बालतृणानां सुराजनकत्वात् सुरायाः अधिकानि सोमवत् पूतत्वाभावात् सोमात् न्यूनानि। तथाच सीसक्लीबशष्पाणां अंतरालवर्तित्वम् साम्यं बोध्यं "यत्सौत्रामणी समृद्ध्यै" इति श्रुति

वाक्यात् सोमादिभिः व्रीह्यंकुरादिरूपे सति
सौत्रामणी कर्मसमृद्धिः भविष्यतीत्यर्थः। तथा अ
श्विन्यादि देवताः इन्द्रस्य स्वरूपभूतमिमं यज्ञं
औषधि सदृशैः पदार्थैः चिकित्संते। अस्मिन्
मंत्रे "भिषज्यन्" इतिपदं चिकित्सार्थकमिति श्री
सायनाचार्याः व्याख्येस्पष्टमूचुः।

लोमचर्ममांसानामुत्पत्तिः

"तदस्यरूपमिति" द्वितीय मंत्रे चिकित्सा प्रकारः
उक्तः। तथाहि लोके यथा अनेके अगदंकाराः
मिलित्वा एकस्यशरीरस्य चिकित्सां कुर्वन्त
सन्तः परस्परं भेदभावरहिताः ऐकमत्येन
वर्तन्ते। तथाप्रकृतयागेऽपि द्वौ अश्विनौ एकासरस्व
ती इत्येताः तिस्रो देवताः मिलित्वा स्वकीयाभिः
शक्तिभिः इन्द्रस्य यत् यज्ञात्मकं स्वरूपं तत्
विनाशरहितं यथा भवति तथा संपादयामासुः।
एवं चिकित्साकरणे साधनानीमानि तोक्मादीनि।
एतैः अंकुरितव्रीहिभिः तोक्मशब्द वाच्यैः अंकुरा
वस्थायां बालतृण विशेषैः अनेकधा इन्द्रशरीरे
लोमानि संपादयामासुः

ननु लोम्नां प्रादुर्भवस्य चर्म आवश्यकं विना च
र्मणा कथं लोम्नामुत्पत्तिः स्यात्? इत्याशंक्य अंकुर
प्ररोहाधार भूताः ये बीजविशेषाः ते लाजशब्देन
उच्यन्ते ते लाजाः अस्य इन्द्रस्य यज्ञस्वरूपस्य
चर्मस्थानीयाः मांसस्थानीयाश्च आसन्। इन्द्र
पर्वे = इन्द्रपक्षे अंकुरित व्रीहयः तदंकुररूपं

बालतृणानि लोमान्यासन् लाजाः त्वक्मांसविशे
षरूपा आसन् इति वक्तुं शक्यं। यज्ञपक्षे ते लोमानीव
त्वगिव मांसमिव आसन्निति वक्तव्यं। यज्ञशरीर
स्य इन्द्रशरीरस्येव अदृश्यमानत्वात्. अतएव
श्रुतौ उपमानार्थकनकारद्वयं स्थलद्वयेपि दृश्य
ते। अत त्वङ्मांसनिष्पत्त्यर्थं केवलव्रीहीन् विहाय
लाजाः स्वीकृताः श्रुत्या। किमर्थं? त्वङ्मांसयोः
विस्तृतत्वमस्तीति व्रीह्यापेक्षया लाजानां विस्तृत
त्वात् विस्तृतलाजस्वीकरणं युक्तियुक्तमेवेति
बोध्यं। यथा लोके भिषजः व्याधिना तनुत्वं वा?,
प्रवृद्धं वा यत त्वङ्मांसादिकं तत् ओषधिरस
परिणामभूतैः भेषजैः नष्टं चेद् उत्पादयन्ति।
प्रवृद्धं चेत् समीकुर्वन्ति। स्तोकं चेत् यावदा
वश्यकं तावत् संपादयन्ति। तथा अत्रापि एतैः
तोक्मादिभिः इन्द्रशरीरे लोमचर्म मांसानि
अश्विन्यादयः भिषजः संपादयन्तीत्यर्थः।

अस्थिमज्जानोत्पत्तिः

तृतीयमंत्रार्थं पर्यालोचयामः यथा रुद्रः यद्यपि
क्रूरो देवः "रुद्रो वै क्रूरः" इति श्रुतेः हिंसितुं सम
र्थः तथा अश्विनावपि व्याधिं नाशयितुं समर्थौ
इत्यर्थः तादृशौ अश्विनौ अस्मिन् यज्ञे यज्ञ
शरीरचिकित्सायां प्रधानवैद्यौ शरीरनिष्पाद
कौ इत्यर्थः। सरस्वती काचन स्त्री रोगहारि
णी वर्तते एषापि भिषक् शरीरमध्ये कंचन

आकारं निष्पादयति । अत्र श्रुतौ पेशशब्दः कश्चन निर्दिष्टो वर्तते । पिश अवयवे इत्यस्मात् धातोः उत्पन्नोऽयं शब्दः । अतएव कंचन अवयवाकारं निष्पादयतोऽयमर्थलाभो भवति । आन्तराकारनिष्पादने साधनं किमिप्यत्र सुराद्रव्यपदार्थद्वयं निर्दिष्टमस्ति । तयोरेकः मासरः द्वितीयः कारोतरः । ईषत्तप्तानां यवानां चूर्णीकरणानन्तरं तस्मिन् चूर्णे यः सूक्ष्मभागो वर्तते तंभागं दध्ना तक्रेणवा मिश्रयित्वा दर्भैः आच्छादितश्चेत् सः मासरः इति भाष्यकाराः श्रीविद्यारण्यचरणाः भाष्ये मासरशब्दनिर्वचनमेवमूचुः । अमरनिघण्टौ तु "मासराचामनिस्रावा मंडे भक्तसमुद्भवे" इति यवागूविशेषतया निर्दिष्टः मस्यति घनीभावेन परिणमतीति मासरः "मसपरिणामे" इति धातोरुत्पन्नः पाककाले अन्नोपरि स्थितं यत् मंडमस्ति तत् पातात् भूमौ स्रावितंचेत् तस्यमासर इति अमरकाराणामाशयः तथापि अत्र भाष्यविरोधान्नियं हेतुरुपेक्ष्यएव ।

अपरः पदार्थः कारोतरः अयं कस्मिंश्चित् भूश्वभ्रे यावान् गर्तोऽस्ति तावान् वेणुदलनिर्मितः सर्वतः चर्मपरिवेष्टितः सुराश्रापणार्थं अवस्थापितः कश्चन भांडाकारः पदार्थविशेषः गोलश्चापि सः स्थापनीयः सएव कारोतरशब्दार्थ इति श्रीविद्यारण्यस्वामिनामाशयः । वर्णव्यत्ययेन "कारोत्तरः सुरामंडः", इत्यमरकोशे कारोत्तमशब्दोऽस्ति कारिण = क्रियया उत्तमः कारोत्तमः मादकक्रियया उत्तम इत्यर्थः । अयं तत्सुरोपरि स्थितमंडवत्

सुरायाः उपरिविद्यमानः मंडविशेषएव कारोत्तम
शब्दार्थइति अमरसिंहाशयः। अस्मिन् शब्दार्थेपि
सुरासंबन्धोस्ति। तद्दोषभांडनिक्षेपार्थं तद्रक्षणार्थंच
साधनाचार्योऽकरोद्यो। तत्साधनान्यपि आवश्यका
न्येव। अवटस्थानीय सुराभांडविशेषापेक्षया।
तदुपरि स्थितस्यमंडस्य कारोतर शब्दार्थत्वेपि
दोषोनास्तीति प्रतिभाति तत्र कश्चन लेखकप्रमादोस्ती
तिभाति। तथापि अमरकोशस्य शब्दस्य अर्थस्य
विद्यारण्य स्वामिनिर्दिष्टस्य अर्थस्यच अधिक
भेदाभावात् तथा किंचित् चिंतितम्. इदं साद्गस
मेवस्थान्नाम अतीन्द्रिये वेदार्थविज्ञाने श्रीविद्या
रण्यस्वामि चरणाएव शरणीकरणीयाः। एताभ्यां
पदार्थाभ्यां मासरकारोतर शब्दाभ्यां सरस्वती
इन्द्रशरीरे अस्थि मज्जानंच संपादयतीत्यर्थः।

रक्तस्य अवयवान्तराणांचोत्पत्तिः

अधुनाचतुर्थमंत्रार्थो विचार्यते। तथाहि
यथाबुद्धिमान् कुविंदः प्रहारदंडेन नूतनवस्त्रं निष्पा
दयति तथैवेयमपि सरस्वती अश्विदेवताभ्यां सहिता
सती देवतात्मनोनिवासयोग्यं दृष्टिप्रियं सुंदरं देवे
न्द्रस्य शरीरं मनसानिष्पादयति अपिचेयं सर
स्वती अस्मिन् शरीरे धारया स्रवत्सुराद्रव्येण
रक्तं संपादयति स्रवत्सुराद्रव्यं रक्तस्थानीयमि
त्यर्थः। अन्यच्च ईषत्खण्डिताः यवाः यदि चूर्णी
कृताभवेयुः तस्मिन् चूर्णे यः स्थूलभागो वर्तते।
तंभागं संस्रावेण अभिषिच्य दर्भैः आच्छादितः

चेत् स ःनग्नहुरित्युच्यते अनेन पदार्थेन
इयं सरस्वती स्वबुद्धिप्रतिभया शरीरे अवयवा
न्तराणि संपादयति । सोऽयं नग्नहुः अवयवान्तरस्था
नीयइत्यर्थः ।

शुक्रपुरीषोत्पत्तिः

पंचममंत्रसारांशः एवंदृश्यते तथाहि एताः अश्विन्या
दिदेवताः कर्तव्यविषयकज्ञानाभावरूपां अमतिं विपरी
तज्ञानरूपां दुर्मतिं च बाधमानाः शरीरमध्ये पयो
द्रव्यसुराद्रव्याभ्यां मूत्रद्वारात् निर्गमनयोग्यं रेतः
उत्पादयन्ति इदं रेतः शरीरधारणाय अतिमुख्यं
भवति इदं श्वेतवर्णत्वात् दीप्तिमत् विनाशरहितं च

ननु रेतः यदा मूत्रमार्गात् निर्गच्छति तदा विनष्टमेव
भवति कथं विनाशरहितमित्युच्यते इत्याशंक्य अप
त्योत्पादकत्वादमृतमित्युच्यते इत्युक्तं भाष्ये ।
किंच पुनस्ता अश्विन्यादयो देवताः ताभिः संपादयि
तव्यस्य यज्ञरूपदेवेन्द्रशरीरस्य उदरमध्ये अवध्यं=
प्राणवायुमपि जनयन्ति । अवध्यशब्दार्थः भाष्येसाय
णाचार्यैरेवमुक्तः अर्धजीर्णमन्नं अपरिपक्वं पुरीषं
अवध्यशब्दवाच्यमिति । वातस्य सघुवमिति विशेषण
मस्ति घुनशब्दः श्वासकालीनं शब्दमनुकरोति
तेनशब्देन सहितं प्राणवायुं पूर्वोक्तं पुरीषमपि पयस्सु
राभ्यामेव जनयन्तीत्यर्थः ।

ज्ञानशक्तियकृत्क्लोमाद्युत्पत्तिः

षष्ठमंत्रे ज्ञानशक्त्यादीनामुत्पत्तिराम्नाता । तथाहि शोभ
नं यथा भवति तथा तायत इति सुत्रामा इन्द्रः पशोः हृद
यद्रव्येण शरीरे यथार्थज्ञान शक्तिं जजान ।
ननु इन्द्रशरीरोत्पत्तिरेवात्र प्रतिपाद्यते कथमिन्द्र एव
स्वीयशरीरे यथार्थज्ञान शक्तिं जनयिष्यति ?

इत्याशंकाया इन्द्रस्य यज्ञस्वरूपस्याविवक्षित
त्वात्। किंच यागकर्तुः लोकांतरे प्राप्तव्यस्य इन्द्रशरीर
स्य निर्माणे तात्पर्याच्च न दोषः। यद्वा इन्द्रो मा
याभिः पुरुरूप ईयते,, इति श्रुत्या इन्द्रस्य अनेक
दिव्य शक्तिमत्वात् अनेकरूपत्वमपि संगच्छते।
यथा कथाचित् शंकया यथार्थज्ञानजनकत्वं देवेन्द्र
स्य पुत्रमेवेत्यर्थः। सविता पुरोडाशेन द्रव्येण यकृत
जजान। वरुणश्च पुरोडाशेन क्लोमानं भिषजयन्
वर्तते यकृत्क्लोम शब्दाभ्यां हृदयस्य पार्श्वद्वयवर्ति
नौ मांसखण्डौ उच्येते। अमर निघंटौ तु एतत्पदा
र्थद्वयविषये कश्चन विशेषः उक्तः यकृन्नाम उद
रस्य सव्यभागे विद्यमानः कालिमवर्णयुक्तः
मांसखंडविशेषः। तथैव क्लोम शब्दार्थः उदर
स्य दक्षिणभागे रक्तिमवर्णयुक्तः मांसखंड
विशेषः इति। पुनः वरुणः यकृत्क्लोम्नोः समी
पवर्तिनी ये द्वे मांसे वर्तेते "मतस्ने,, इति व्यव
ह्रियेते ते मांसे सोमरसस्वीकरण योग्य दारुमय
पात्रविशेषैः ग्रहैः संपादयति तथा पित्तमपि संपाद
यतीत्यर्थः एवं अवयवजातं संपादयतीत्यर्थः।

अन्त्रगुदप्लीहनाभितुंदनिरूपणम्

सप्तमेमंत्रे एतेषामुत्पत्तिः उच्यते तथाहि मधुरं क्षीरादि
रसं धारयन्ती या स्थाली वर्तते सैव आंत्रस्थानीया
अंत्रस्यैव आंत्रमिति पाठान्तरम् इति अमरकोशे वर्तते
आन्त्राणि इत्यनेन हृत्स्वपुरीततः उच्यन्ते। अम्यते=
संभज्यते अन्नादिकमनेनेति अन्त्रं अमगत्यादिषु

इतिख्यातो : निष्पन्नमिदं पदं स्थाल्यतिरिक्तानि यानि पिष्टादिद्रव्यस्थापनार्थानि पात्राणि सन्ति तानि गुद स्थानीयानि स्थाल्याः पात्राणां च कश्चन दृष्टान्तः उक्तः श्रुतौ शोभनक्षीरदोग्ध्री धेनुरिव स्थाल्या दिकं वर्तत इति तादृशस्थाल्यादिना आंत्रगुदादीन्यु पलक्ष्यन्ते इत्यर्थः प्लीह शब्दः मांसविशेषवाची सः मांस विशेषः श्येनाख्यस्य पत्रिणः पत्रमिव वर्तते तादृशः मांसविशेषः स्वस्य प्लीहरूप याः व्यवहार शकयः सन्ति ताभिः सह तद्विशिष्टस्सन्नेव पात्रैस्संपादयतोऽर्थः येयमभिप्रेकार्या आसन्दी : उच्चस्थाने स्थातुं योग्यं आसनं आसंदीत्युच्यते सेयं नाभिस्थानीया। यातुमाता साभूम्यात्मिका वेदिः सेयमुदरस्थानीया वेदिरूपया भूम्या देवेन्द्रस्य उदरात्मकः अवयवः निष्पद्यत इत्यर्थः।

## वनिष्ठु नासिकाच्छिद्र निरूपणम्

एतेषाम् अवयवानाम् निरूपणम् अष्टमे मंत्रे दृश्यते देहमध्ये वनिष्ठुरिति कश्चन मांसविशेषः वर्तते। सः दिवान्ध पक्षि सदृशो वर्तत इति, वनिष्ठोः मांसविशेषस्य यः पुरोभागो वर्तते तस्मिन् पुरोभागे योनिरस्ति तस्यां योन्यां अन्तः गर्भो वर्तत इति तं गर्भं वनिष्ठु रिति प्रख्यातो मांसविशेषः स्वोपशाकिभिः उता दधिपतो इति च चिकित्सकाः वदन्ति तं वनिष्ठुमांस विशेषं सरस्वत्यादयः ऋत्विजः अस्मिन् क्रतौ द्रव्यद्रव्य स्थापनार्थेन कुम्भेन पदार्थेन उत्पादयन्ति। एतावता द्रव्यद्रव्यस्थापनार्थं याकुंभी वर्णिता तस्यां कुम्भ्यां

अस्मिन् यागे अध्वर्युः पितृदेवतातृप्त्यर्थं अमृतं दोग्धीव दृश्यते यः कुंभो वनिष्ठुस्थानीयः अस्मिन् मंत्रे "दुदुहे" इत्यत्र नकारः उपमार्थकः न तु निषेधार्थकः अतएव दोग्धीव इत्यर्थः ता यस्सम्पन्नः। किंच अस्मिन् सौत्रामण्याख्ये कर्मणि सुरापवनार्थं शतच्छिद्रयुक्तः कश्चन कुंभोऽस्ति। अयं बहुच्छिद्रोपेतत्वात् शतधारः सुरास्रावणयुक्तत्वात् उत्सः एतादृशोऽयं कुंभः। सोऽयं न पत्कः अनेन कुंभेन भेषजेन भिषग्वराः सरस्वत्यादयः प्लाशीः सृजन्ति। प्लाशीशब्देन नासिकाच्छिद्राण्युच्यन्ते। तानि नासिकाच्छिद्राणि सृजन्तीत्यर्थः।

मुखशिरसोरुत्पत्तिः

नवमे मंत्रे ~~अस्मिन्~~ "सद" इति पदमस्ति तस्य सीदन्ति अत्र तिष्ठन्ति देवयजनस्थानमिति भाष्ये सायनाचार्याः प्रतिपादयन्ति। अयं शब्दः न तु सकारान्तः लोके सभावाचकस्य सदश्शब्दस्य सकारान्तत्वं प्रसिद्धं किंतु अकारान्तोऽयं सदशब्दः तेन सदेन देवयजनार्थकेन भेषजेन निष्पादनीये इन्द्रशरीरे सुंदरं मुखं शिरश्च संपन्नमित्यर्थः। किंच अस्मिन् यागे द्रव्यशोधनाय यत् वस्त्रमस्ति तेन वस्त्रेण अस्मिन् शरीरे जिह्वा उत्पाद्यते। अपि च अस्मिन् क्रतौ यव शब्दवाच्यं यत् पिष्टपात्रमस्ति तेन गुदनिष्पत्तिः भवति। तत् पिष्टपात्रं अपानस्थानमिव वर्तते अस्मिन् क्रतौ द्रव्यशोधनार्थं यः पशोः वालः = पुच्छं निक्षिप्यते

सः अस्यनिष्पाद्यमानस्य शरीरस्य भिषक् चिकित्सकस्थानीयः। तेनहि बालेन भिषजा व्याधिसदृशः दृश्य दोषः उपनीयते। यः पशोः शोकः अस्ति श्रोण्यां मूलस्थानमिव दृश्यते। तेन मूलस्थानोत्पत्तिः भवतीत्यर्थः। अश्विनौ सरस्वतीच एतत्सर्वं तिस्रः भिषग्वराः संपादितवत्यः। एताभिः देवताभिः निष्पन्नः देहः वह्निज्वालारूपेण तेजसा निरूप्यमाणस्सन् वेगवानिव लक्ष्यते इतिज्ञेयम्।

चक्षुः पक्ष्मादिजन्म

दशममंत्रार्थपर्यालोचनायां एतदवगम्यते किम्?
अश्विनौ संबन्धिनौ गोधूमावयवौ ताभ्यां गोधूमावयवाभ्यां उत्पादनीये देवेन्द्रशरीरे विनाशरहितं चक्षुः संपादितं। पक्वेन हविस्स्वरूपेण भागेन चक्षुर्गतं तेजः संपादितं भवति* अस्मिन् क्रतौ सक्तुनिष्पादनार्थं ये गोधूमाः स्वीक्रियन्ते तथैव बदरफलविशेषाश्च स्वीक्रियन्ते तैरुभयैः उतानि = परस्परं संबद्धानि अक्षिरोमाणि संपाद्यन्ते एतद्यागीयपशौ यत् रूपमिव दृश्यते तत् उत्पत्स्यमानशरीरस्य चक्षुर्गतं यत् शुक्लमंडलं कृष्णमंडलंच उभयमस्ति तत् अश्विनौ देवौ पक्ष्माभिराच्छादयतः इत्यर्थः अनेन किं ज्ञायते पशुगतरूपेण चक्षुर्गत शुक्लकृष्णमंडलरूपोत्पत्तिः भवतीति बोध्यम्।

नासिकागत श्वासप्रवृत्तिसामर्थ्यम्

एकादशेमंत्रे श्वासप्रवृत्तिसामर्थ्यमभिहितमस्ति

"सारस्वतम् मेषमिति" श्रुत्या विहितः यः सारस्व
तोमेषोऽस्ति सः अविरिव वर्तमानो दृश्यते अविजा
तीय इत्यर्थः । एवमेतेषु सर्वत्र प्रायशः नकारः
उपमानार्थकः एव दृश्यते अयं सारस्वतोमेषः नासि
कागत श्वासप्रवृत्तिसामर्थ्याय प्रवर्तते । इयं च नासि
का प्राणरूपस्य वायोः कदाचिदपि विनाशरहितः
पन्थाः । इयं च नासिका प्राणवायोः गमनागमनहेतुः
यथा भवेत् तथा सौत्रामणीय पयस्सुराग्रहाभ्याम्
निष्पादिता । पयस्सुराग्रहौ नासिकायां प्राणवायोः
गमनागमनमार्गमिव रूपयतामित्यर्थः । किंचेयं सर
स्वती स्त्रीत्वेषु कर्मगतान्निः हरितसक्तुभिः उत्प
द्यमान शरीरे व्यानवायुं जनयति । अथेयं सरस्वती
नासिकायामन्तः दृश्यमानानि लोमानि अस्मिन् कर्म
णि सक्तुनिष्पादनार्थं संपादितैः बदरफलैः संपा
दयामास

श्रोत्रादिनिष्पत्तिः

द्वादशे मंत्रे अयं विषयः प्रतिपादितः दृश्यते कः ?
"ऐन्द्रमृषभमिति" कृ. य. तै. सं. का १-प्र. ४-अ. २
इति श्रुत्या इन्द्रार्थं विहितः ऋषभः इन्द्रदेवताकः
अतएव इन्द्रस्वरूपसदृशः उत्पद्यमानस्य इन्द्र
शरीरस्य बलार्थमयमृषभ स्संपद्यते । अनेन
किंज्ञायते प्रकृतयागीय पयस्सुराग्रहौ ऋषभपशु
संबन्धि कर्णाभ्यां उत्पद्यमानशरीरे बाधिर्यरहि
तं श्रोत्रेन्द्रियद्वयं संपादयामासतुः किंच भूम्यामु
त्पन्नयवाः इन्द्र [illegible] व्यामासादिताः येदर्भाः

ते केसरत्वेन सपन्ना: अत्र केसर शब्देन प्रकृष्यतमा निलोमानि लक्ष्यन्ते तानि बहूनि उत्पद्यमान शरीरे लोमत्वेन संजातानीत्यर्थ:। तथैव मध्यमशाखि काभि: तत्पुष्पेभ्य: संपादितं यत् सारभ्यंम स्वस्ति तत्तुल्य रूपतया, स्थितातिस्थूल बदरफल पिष्टं x यज्ञप्राग्भ स्थानीयमासीत यज्ञमुख्यत्वेन संपन्नमित्यर्थ:।
[यत् प्रागीय मस्ति तत्]
अस्मिन् मंत्रे कर्कन्धु शब्द: प्रयुक्तो दृश्यते। स: "कर्कन्धूर्बदरी कोली घोन्टा" इत्यमरकोशात् बदरीवृक्ष परतया ज्ञायते कर्काणि लोहितानि पर्णानि फलानि यत्र इतिव्युत्पत्तिरपि तदनुकूलैव तथापि श्रीविद्यारण्यचरणै: भाष्ये कर्कन्धु शब्दस्य अतिस्थूल बदरफल पिष्टमित्यर्थवर्णनं कृतं। सर्वज्ञस्य भाष्यकर्तु: वाक्यमागमतुल्यत्वात् प्रमाणीकर्तव्यम्।

## श्मश्रुविन्दियनिरूपणम

तयोदश मंत्रार्थपर्यालोचनया मेवं ज्ञायते किमिति? "तयाणि लोमानि" कृ· य· [illegible] ब्रा· क· 1-प्र· 8· अ· 2। इति श्रुतिवाक्येन वृकव्याघ्र सिंहानां त्रीणि लोमानि विहितानि सन्ति तान्यत्र गृहीतयप्रक्षिप्यन्ते। तेषु लोमसु यत् वृकस्य लोम वर्तते तत् संपाद्यमान शरीरस्य गुह्यप्रदेशे लोमसंपादकं भवति। यत्तु व्याघ्रलोमास्ति तत् मुखे दृश्यमान श्मश्रुलोमानि जनयति। यत्तु सिंहस्य लोम वर्तते तत् शिरसि केशा न संपादयति। शिरसि निष्पन्न केशै: अनुष्ठान योग्यतासिद्ध्यर्थं शिखा संपादनीया भवति। केशाभावे योग्यताभाव: अर्थात् शिखाभाव: तदभावे अनुष्ठान योग्यताभाव: अर्थात् शिखी संपन्न [illegible] अनुष्ठाता भवतीति लोके कीर्ति:

स्यात् व्यवहारकाले रमणीयत्वेन शोभाहेतु उपभवति याज्ञीय यातु लोमगता नैगनि यात्मिका दीप्तिः अस्ति सा संपद्यमानस्य शरीरस्य इन्द्रियसंपत्तिहेतुरिति बोध्यं। तथाच अश्विन्यादि देवताः एतद्याज्ञीय लोमत्वेण उत्पाद्यमानशरीरे गुह्यमुख शिरोभागत्वे लोमोत्पत्तिं संपादयन्ति। तथा लोमगत दीप्त्या इन्द्रियसंपत्तिमपि संपादयन्तीति बोध्यं।

नन्वस्यां सौत्रामण्यां वृकव्याघ्रसिंहानामेव लोमानि किमर्थं स्वीकृतानि? लोमत्रयस्वीकरणे आशयः कः? इत्यादि प्रश्नानाम समाधानानि श्रुतौ उपलभ्यन्ते। तथाहि सौत्रामणीयागप्रकरणे सक्तुप्रकृतिकद्रव्य विधानप्रसंगे एवं श्रूयते

"इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्,, इत्यादिकं कृ. य. तै. ब्रा. का. १- प्र. ८. अ. ५

कदाचित् सोममभिषुवतः इन्द्रस्य सामर्थ्यं दशधा भिन्नं सत् भूमौ पतितमासीत्। युक्तं चैतत्। अभिषवस्य वध्यरूपत्वं "घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति,, इति कृ. य. तै. सं. का ६. प्र. ६. अ. ७ श्रुतिवाक्यात् ज्ञायते। तथा इन्द्र सामर्थ्यस्य दशधा बहिरागमनप्रकारः उच्यते तथाहि सच इन्द्रः वक्त्रेण त्रिवारं निष्ठीवनं कृतवान् तस्मात् निष्ठीवनात् द्रव्यत्रयमुत्पन्नं। प्रथमनिष्ठीवनेन कुवलमुत्पन्नम् कुवलं नाम बालखर्जूरफलं। द्वितीयनिष्ठीवनात् कर्कन्धुपरिमितं सूक्ष्मं बदरीफलमुत्पन्नं। तृतीयनिष्ठीवनात् कर्कन्धु उत्पन्नं कर्कन्धुनाम हरीतकीपरिमितं स्थूलं बदरीफलमुत्पन्नं तद्रेतद्रूपं इन्द्रस्य मुखच्छिद्रात्

निस्सृतम् यत्तु वीर्यं नासिकाच्छिद्रात् निस्सृतं
सः सिंहमृगः अभवत् । यच्च सामर्थ्यं अक्षिच्छिद्रा
भ्यां निस्सृतं सः शार्दूलमृगोऽभवत् । यदपि वीर्यं
कर्णच्छिद्राभ्यां निर्गतं सः वृकः अभवत् वृको नाम
आरण्यश्वा इत्यर्थः । यो वीर्यभागः मूर्धच्छिद्रात् ऊ
र्ध्वः निस्सृतः आसीत् सः सोमोऽभवत् याच वीर्य
कला पायुगुह्याभ्यां निर्गता सा सुरा अभवत् ।
नन्वत्र नासिकाक्षिनेत्राणां द्वित्वे षट्छिद्राणि
संपद्यन्ते मुखमूर्धगुदगुह्यैस्सहितत्वे दशच्छि
द्राणि संपन्नानि भवन्ति तथापि कुलादीनि सुरान्ता
नि अष्टद्रव्याण्येवोत्पन्नानि तत्कथं संगच्छते इति चेदुच्यते दशच्छिद्रेभ्यः दशद्र
व्योत्पत्तौ अस्याः श्रुतेः न तात्पर्यं । किंतु छिद्रदशका
त् निर्गतत्वेन देवेन्द्रस्य दशधा वीर्यपातः अभव
दिति कथनेएव तात्पर्यं बोध्यं । अत परिगणितेषु
अष्टसुद्रव्येषु त्रिविधाः सक्तवः कर्तव्याः ।
कुलैः बदरैः कर्कन्धुभिश्च निष्पन्नत्वात् सक्तूनां
त्रिविधत्वम् सक्तूनां इन्द्रियाभिवृद्धिहेतुत्वात् संकृति इ
न्द्रियसंपत्तिः भवति । तथा तथाणां सिंहशार्दूलवृ
काणाम् त्रिविधानि लोमानि स्वीकार्याणि तथा स्वीकृतैः
लोमभिः दीप्तिलाभो भवति । लोके अश्वादयनेक
पशूनां सत्वेऽपि अत्र सिंहशार्दूलवृकानामेव स्वीक
रणे देवेन्द्रस्य वीर्यपातादुत्पन्नत्वात् एतेषां तथाणां
लोम्नां स्वीकारः युक्त एव भवति । तथा त्रिसंख्या
काः अश्विवसरस्वती सूत्रामदेवताकाः ग्रहाः गृहीत
व्याः । एतैः ग्रहैः वीर्यलाभो भवति । अत सक्तु
त्रयलोमत्रय ग्रहत्रयैः निष्पन्ना नवसंख्या इत्यमेव

मुख्यासंख्या अतएवत्रापि दशासंख्या प्रसक्ता
इन्द्रस्यवीर्यपातः छिद्रदशकात् पतितइति। तथापुरु
षेपि नाभ्यासह प्राणानां दशसंख्या संपन्नाभवति।
तथापि नाभ्याः छिद्राभासरूपत्वात् नवसंख्यायाः
एवप्राधान्यं। तथाहि पुरुषे "शिरसि सप्त अधो
द्वे" इति मुखादीनि यथा मुख्यच्छिद्राणि तथा नाभिः
नमुख्यं छिद्रं। तथैव सौत्रामण्यां नवसंख्यैव मुख्या
सौत्रामणी दशमीत्वं तु नाममात्रमेव नतु द्रव्यरूपेण। किं
तु नाम्नैवेत्यर्थः। पूर्वोक्त नवद्रव्य निष्पन्नं कर्म
संघ नामत्वात् सौत्रामणी दशमीत्वं नवच्छिद्रगताः
प्राणाः इन्द्रिय शब्देन वीर्य शब्देनचोच्यन्ते। अतः
अत्र द्रव्यगतया नवसंख्यया प्राणान् इन्द्रियं वीर्यंच
यजमानेसंपादयति आस्तांप्रासंगिको विषयः प्रकृत
मनुसराम:

## अश्विनसरस्वतीवैद्यकृत्यम्

अधुना चतुर्दशादि मंत्रतत्वार्थसमीक्षा क्रियते
तथाहि सौत्रामणीयागानुष्ठान काले चिकित्सकाभ्यां
अश्विभ्यां स्वसंपाद्ये इन्द्रशरीरे हस्तपादादीन्यं
गानिसंपादितानि। अगदंकारिणी सरस्वतीतु सर्वथा
इन्द्रशरीरं कार्तिमानिकं तत्तुल्यं संपूर्णदेहं संपादयि
तुमेव प्रयतते नकेवलं इन्द्रस्य स्वरूपमेव किंतु तस्य परि
पूर्णमायुरपि संपादयितुमेव प्रवर्तते। किंच "चदि
आह्लादने" इति धात्वर्थ संप्राप्ताह्लादकत्वगुणवि
शिष्टेन चंद्रेण तस्यदेवेन्द्रस्य शाश्वतं तेजोपि संपा
दयितुमिच्छति। तथाकर्तुमेव सासरस्वती भिषक्
अश्विभ्यां ~~संस~~ अंगानि स्वीकृत्य तदंगसाहाय्येन

इन्द्रस्य संपूर्णदेहं समग्रकार्येण तथाच अश्वि
नौ देवेन्द्रदेहे अंगानि संपादितवन्तौ । सरस्वतीतु संपूर्णं देहमसृजदिति विशेषो ज्ञेयः।

किंच अश्विनौ देवौ सायुध्यथा तथा उत्पादनीय शरीरात्मकं गर्भं संपादितवन्तौ । गर्भाशयेऽन्तः स्थिता तं गर्भं सरस्वती परिपालयति । नकेवलं परिपालनमेव किंतु, तं गर्भं निग्रं पोषयति । अप्सु स्थितो वरुणो राजा यथा अब्देवतायां कृत्सुत्पाद यति तथा अनुष्ठीयमानेषु सौत्रामण्याख्योयागोऽपि उदकसारभूत पयस्सुराग्रहै सायुध्येनैव इन्द्रशरीरमुत्पादयतीत्यर्थः । अत एवयपि अश्विदेवाः एव इन्द्रशरीरोत्पादकाः भिषक्त्वात् तथापि यागीय पयस्सुराग्रहादिभिरेव इन्द्रशरीरमुत्पद्यत इति यागी यपयस्सुराग्रहादीनामेव इन्द्रशरीरोत्पादकत्वं तथापि अनुग्रहकारकत्वमश्विन्यादीनामप्यस्ति अश्विन्यादिभिषक्त्वं यागे उपचर्यत इति बोध्यम् । एवम् अश्विसरस्वती भिषग्भिः यागोपयुक्तैः हविर्भिः यागकर्तृयजमानस्य इन्द्रसदृशो देहः संपादितः । सच देहः देवलोके समुत्पद्यते अतएव सः देहः मरणरहितः हृषिप्रियः चंद्रवत् आह्लादजनकः परमं उत्कृष्टो वा भवेत् तादृ शो देहः अश्विन्यादिभिषग्वरैः चिकित्सितोऽस्ति इति श्रुतिप्रदर्शितदिशा अपूर्वं वैद्यविज्ञानं निरू पितम् एवमेव वैद्यविज्ञाने अनेकानि विज्ञानानि वेदेषूपलभ्यन्ते ।

नेत्र रोग निवारक मंत्रार्थ विचारः

" कामिह्ईकाऽकइमेपतंगाः मांथाल्लाऽकुलिपरिमा
पतन्ति । अनाहूतैनान् प्रथमन्तदेवाः । सौपर्णं चक्षु
स्तनुवाविदेय " इति कृ·य·तै·ब्रा·का २-प्र·५·अ·८·

अयं मंत्रः नेत्ररोगपरिहाराय प्रयोक्तव्य इति भाष्ये
श्री सायनाचार्यैः स्पष्टमुक्तं । अस्मिन् मंत्रे मिह्ईका इति
कश्चन शब्दः श्रूयते अस्मिन् मंत्रे सः शब्दः मिह्विका
इति वक्तव्यः छांदसत्वात् मिह्विकैव मिह्ईका इति श्रूयते
अर्थपर्यालोचनायां " प्रालेयं मिह्विका " इति कोशात् हिम
वाचकतया श्रूयते मिह्यति भुवनमिति मिह्विका " मिह "
सेचने इत्यस्माद्धातोरुत्पन्नः । तथा च मिह्ईका शब्दः नीहार
वाचकस्सन् दृष्टेरावरकं रोगविशेषमुपलक्षयति ।
यथा नीहारः दृष्टिमावृत्य पदार्थान् नभासयति । तथैव
मिह्ईकाशब्दार्थ नेत्ररोगोपि दृष्टिमावृत्य पदार्थान् नभा
सयति । किंच अस्मिन मंत्रे पतंग शब्दो वर्तते " समौ
पतंग शलभौ " इति कोशात् शलभवाचकः सः पतंग
शब्दः नेत्ररश्मिजन्यानि केशोंड्काणि आकाशे भा
समानान्युपलक्षयति । प्रसाधिन्या स्त्रीकेशानां संस्कार
काले मस्तकात् स्रस्तानाम् शिरोजानां भूमौ पतितानाम
अनुस्वाराकारेण उंड्काकारेण आकाशसंचारः क्वचित्
क्वचित् अस्माभिः दृश्यते तानि केशोंड्काणि इति व्यव
हारः । यदा औष्ण्य रोगो भवत्यस्माकं तदा नेत्ररश्म
योपि केशोंड्काकारेण दृश्यन्ते उष्णरोगकाले नेत्र
रश्मिजन्यानि केशोंड्कानि आकाशे बहूनि भासमा
नानि दृश्यन्ते । यथा दृष्ट्यावरणं नेत्रदोषः तथा नेत्र
रश्मीनां केशोंड्काकारेण आकाशे भ्रमणमपि नेत्रदो
षएव एतद्रूपमपि मंत्रगत किंशब्दाभ्यामभिव्यज्यते ।

एतन्मंत्र जापिन: मंत्रप्रभावात् पूर्वोक्तेषु दोषद्वये अपगते सति तस्यानुभव: एवं भवति। स: मंत्रान् ज्ञाता "कामिहैंका,,? "इमेपतंगाश्च के,, इमे रोगा: मम अधुना नसन्ति इमेरोगा: कुत्रगता:? इति आश्च र्यप्रकट यति। मंत्रेमं थशब्द: श्रूयते तस्यदधिमं थनमर्थ: इतिभाष्यकारा: वदन्ति "वैशारवमंथ मंथान मंथानोमंथ दंडके,, इतिकोशे मंथशब्द: मंथ नसाधनेप्रयुक्तो वर्तते तथापि साधनेन मंथनमेव खलु क्रियते अत: भाष्यकारै: साधनपरस्य शब्द स्य तत्साध्यव्यापारे प्रयोग: युक्त एवे ति बोध्यम्

अत्र मंथशब्देनदधिमंथनमुच्यते इतिभाष्य स्यस्य मंथनशब्दस्य मंथदंड: इत्यपि अर्थ: व क्तुं शक्यते। कथं? वैशारवमंथमंथानमंथानो मंथदंडके,, इतिकोशे वैशारवश्च मंथश्च मंथानश्च मंथाश्च वैशारवमंथमंथानमंथान इतिद्वन्द्वसमासे मंथन इत्यकारान्तोपि कश्चनशब्दोस्ति। अयंमंथ नसाधनपरएव स एवभाष्यकारै: प्रयुक्तोभवेत् तथाप्यर्थलाभे नन्यूनता तथाचदधिमंथनसंब न्धिन: ये तक्रबिंदव: सन्ति ते मांथा इत्युच्यन्ते यथा मांथा: तक्रबिंदव: आगच्छन्ति तथा आला न्ति आगच्छन्तीति मांथाला: केशोंडुकविशेषा: तेषांप्रसारस्य सर्वत्रसत्वात् केशोंडुक विशेषा: आगच्छ न्ति इत्युच्यते। किंच कुलंनाम समूह: एते केशोंडुका: समूहत्वमपि प्राप्ता इति कुलिशब्देनोच्यन्ते। ते केशों डुका: संघश: मां प्रति आगच्छन्ति। येनेत्र रश्मिजन्या:

केशोंडुकाः ते ....... भवन्ति अतः केशोंडुकाः नेत्रावरकत्वात् नेत्ररोगजन्याइति बकल्प्याः। तथाच एतान् केशोंडुकान् नेत्ररोगदोषान् देवाः केशोंडुकादिकृत नेत्रावरणापगमद्वारा प्रकर्षेण भुरवो क्षिप्त वायुमात्रेण विनाशयन्तु। अनन्तरं अहं तनुवा सहितः सन् चक्षुष्पाटवं लभेयं सुपर्णः पक्षी यथा दूरस्थं पश्यति तथा दूरदर्शनक्षमं नेत्रपाटवं लभेय मिति मंत्रजापिनः आसंसा

## प्रजापति वैद्य विधानम्

"इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनुव्यार्च्छत् तदोषधयो वीरुधोऽभवन्" कृ. य. तै. सं. कं 2 - प्र. 5 - अ. 3 कदाचित् वृत्रासुरं हतवतो देवेन्द्रस्य इन्द्रियसामर्थ्यम् शरीर सामर्थ्यं चोभयमपि पृथिव्यां पतितमासीत्। तत् पृथिव्यां पतित्वा अन्तः प्रविश्य ओषध्यात्मना लतात्मनाच व्याप्तमासीत् तच्च सामर्थ्यद्वयं ओषधयः वीरुधश्च अभवन् तदात्मना परिणत मभूदित्यर्थः। ओषधिवीरुधोर्भेदः "ओषध्यः फल पाकान्ताः" इति "लतागुल्माश्च वीरुधः" इति निघं टुवाक्यद्वयेन पूर्वाचार्यैः प्रदर्शितः। फलपाकानंतरं कदल्यादीनां छेदनेन नाशः प्रसिद्ध एव। तादृशाः कदल्यादयः ओषधय इत्युच्यन्ते। तथाद्राक्षा व्रीहि कदल्यादयः ओषधय इत्युच्यन्ते। तदनन्तरं तांबूल वल्ल्यादयः वीरुध इत्युच्यन्ते। तदनन्तरं इन्द्रः प्रजापति समीपं गत्वा वृत्रासुरहनन काले मदीय सामर्थ्य द्वयमपि भूमौ पतित्वा ओषधिलतारूपेण परिणतमासीदिति कथितवान् सच प्रजापतिः पंशुनुद्दिश्य एवमब्रवीत् हे पशवः यूयं इन्द्रस्य

नष्टं यत् सामर्थ्यं तत् सम्यक् इन्द्राय नयतेति
ननु यत् नष्टं देवेन्द्रस्य सामर्थ्यं तत् पशवः कथंवा
इन्द्राय समर्पयिष्यन्ति? इत्याशंकायाः समाधानमेवं
ब्रवीति श्रुतिः प्रजापत्योपदेशानुसारम् पशवः ओष
धिलतादीन् अभक्षयन्। ओषधिलतादिगतं यदि
न्द्रवीर्यं तत् ओषधिस्य रसकाशात् भक्षणद्वारा स्वश
रीरेषु सम्यक् स्थापितवन्तः तदनन्तरम् स्वनिष्ठं
यदिन्द्रवीर्यं ओषधिद्वारा संक्रान्तं तत् क्षीररूपेण परि
णतमासीत् ततः पशवः पशुवर्गसमाश्रित्य नतास तत् क्षीरं इन्द्राय दुग्धवन्तः
विषयेस्मिन् श्रुतिः निर्वचनद्वयं प्रतिपादयति। यस्मात्
पशवः ओषधिगतमिंद्रवीर्यं भक्षणद्वारा स्वशरी
रेषु क्षीररूपेण सम्यगानयन्निति अतः सम्यगानयनेन
संपन्नमिति व्युत्पत्त्या गोरसस्य क्षीरस्य सांनाय्यमिति
नामसंपन्नं भवति किंच यस्मात् इन्द्राय स्वशरीर
गतं क्षीरं पशवः दुग्धवन्तः तस्मात् प्रतिदिनं दु
ह्यमानस्य क्षीरस्य प्रतिधुगिति नामसंपन्नमिति
अनंतरं देवेन्द्रः गोभ्यः दत्तं क्षीरं पीत्वापि साम
र्थ्यमप्राप्य रोगी भिषजंप्रतिकथनमिव पुनः प्रजापति
समीपं गत्वा हे प्रजापते त्वदाज्ञया पशवः क्षीरात्मना परि
णतं मद्वीर्यरूपं क्षीरं दुग्ध्वा अददुः मयाच पीतं तत्
क्षीरं मदुदरे ~~जाकाम्यावात्~~ न जीर्णमासीत् इत्यर्थमुक्त
वानिन्द्रः ततः प्रजापतिः पशूनाहूय आमं क्षीरं कि
मर्थं दत्तमिन्द्राय? तत् न जीर्णमासीत् अतः क्षीरं शृतं
दत्तमिन्द्राय? तत् न जीर्णमासीत् इत्याज्ञापयामास। ततः पशवः
अग्नितप्तं कृत्वा दीयताम् इत्याज्ञापयामास। ततः पशवः
प्रजापत्याज्ञानुसारं क्षीरमग्नितप्तं कृत्वा इन्द्रायाददुः।

तदा इन्द्रः पश्चात् तत्क्षीरं अपिबत् तस्य पयसः अग्निसंतप्तत्वात् उदरे जीर्णमासीत् तदा इन्द्रस्य यद्यपि इन्द्रिय सामर्थ्यं संजातं तथापि अग्नितप्तस्य पयसः पानेन इन्द्रिय सामर्थ्ये संपन्नेऽपि मम प्रीतिः न संजाता इति पुनः प्रजापतिं प्रत्यब्रवीत्।

तदनन्तरं प्रजापतिः आतंचन कर्तॄनुद्दिश्य एवम ब्रवीत् हे आतंचन कर्तारः यतः देवेन्द्राय शृतं क्षीरं प्रीतिं न जनयामास अतः तत्क्षीरे येन पदार्थेन निक्षिप्तेन दधि निष्पन्नं भवेत् तत्पदार्थं निक्षिप्य दधिकृत्वा इन्द्राय दीयताम् तत् दधि इन्द्राय प्रीतिम् उत्पादयिष्यति, इति पुनरपि निर्वचनद्वयमुच्यते यस्मात् शृतं पयः इन्द्रस्योदरे सम्यगाश्रितमभूत् जीर्णं सत् वीर्यजनकमासीत् अतः श्रा पाके इत्यस्मात् धातोः श्रीङ् पाके इत्यस्मात् धातोर्वा शृतमिति नाम संपन्नमिति श्री विद्यारण्य स्वामिनः।

भट्टभास्कराचार्यैस्तु "शृतं पाके" इति निपात्यते इति यद्वा शृणातेः शृतमिति छान्दसं संप्रसारणमित्याहुः यत् शृतमपि पयः इन्द्रस्य प्रीतिजनकं नासीत् तच्च पयः दधिकृतं सत् एनमिन्द्रमधिनोत् = अप्रीणयत् तस्मात् दधिनाम संपन्नं भवति अत "हिवि दिवि धिवि, जिवि, प्रीणनार्थाः" इति प्रीणनार्थेषु धिविरप्य स्ति। अतः इदित्वान्नुम् "धिन्विकृण्व्योरच" इति सूत्रेण वकारस्य अकारादेशः उ प्रत्यय श्च अदिविषये लङि तिपि इकारलोपे अडागमे "अतोलोपः, 6-4-84

इत्यकारलोपे स्थानिवद्भावात् लघूपध
गुणाभावे तिपः पित्वद्ङित्वे अर्थात् उप्रत्ययस्य
सार्वधातुकगुणे अधिनोत् इति रूपसिद्धिर्भवति

यतः इन्द्रं दधि अधिनोत् = अप्रीणयत्
अतः "ऐन्द्रं दधि" इति विधिः स्तुत्यर्थमवग
म्यते तथैव श्रुतपयसः प्राप्तेन्द्रिय सामर्थ्यत्वात्
इन्द्रस्य, "ऐन्द्रं पयः" इत्यपि विधिरुन्नेयः।

विषयेऽस्मिन् कंचन विचारं कुर्वन्ति ब्रह्मवादिनः
जुह्वां दधिपयसोः अवदानमिन्द्राय कर्तव्यम्। प्रथमतः
दध्यवदानं वा उत पयसोऽवदानं वा ? इति विचारे दध्यव
दानमेव प्रथमतः कर्तव्यं इति पूर्वपक्षिणः आहुः
कुत इति चेत् पूर्वदिने रात्राविव दधि उत्पाद्यते उक्त
रेश्रुः प्रातः दोहः इति दोहस्य पश्चाद्भावित्वं दध्न एव
पूर्वभावित्वं अतः दध्न एव पूर्वं वदानमिति पूर्वपक्षे
प्राप्ते राद्धान्त उच्यते पूर्वभावि दध्यवदानमनादृत्य
सृतस्य क्षीरस्यैव पूर्वावदानं कर्तव्यं। ~~[struck]~~ यतः
इन्द्रस्य इन्द्रिय सामर्थ्यं औषधीरूप आनीय इन्द्रा
र्थं ~~प्रति~~ दुग्धं तप्तं क्षीरं इन्द्रे प्रथमतः अवस्थाप्य
उपरिष्टात् दधि निक्षेपेण इन्द्रस्य प्रीतिस्संजाता।
एवं कृते सति क्षीरं पूर्वभावि दधि पश्चाद्भावि
इत्येवमुत्पत्तिक्रममपि प्राप्तवान् भवति। अतः
पूर्वमेव क्षीरस्वरूपमवदेयं पश्चादेव दध्यवदा
नमिति सिद्धान्तः ब्रह्मवादिभिरुक्तः इति ~~श्रुति~~
श्रुतिरहस्यं ज्ञातव्यम्

दध्नि उत्पत्तिप्रकार :

यस्मिन् शृते पयसि स्वीकृतेपि इन्द्रस्य प्रीत्यभाव : यस्मिन् दध्नि स्वीकृते अति प्रीत्युत्पत्ति : तादृशां प्रीति जनकं दधि कथमुत्पद्यते ? इत्यत षट प्रकारा अनुष्ठानि निर्दिष्टा : सन्ति । तथाहि लोके पूतीका इति कांचनलता अस्ति सा आकारे सोमलतावत् भवति इति भाष्यकारा आहु : यद्यपि अधुनातने काले सोमलतापरिचय : अस्माकं नास्ति तथापि भाष्यकारो क्तरीत्याज्ञातम्यमेव पूतीकलताया : खंडै : शृतेपय सि आतंचने कृते सति (सोमलताखंडानां निक्षेपे कृते सति) दध्युत्पद्यते तथैव पलाशवृक्ष शाखाया : त्वगंशा वा पलाशवृन्तानि वा शाखांशा वा पर्ण वल्का इत्युच्यन्ते । तै : पूतीकै : पर्णवल्कै : उभयै : वा शृते पयसि आतंचने कृते सति दध्युत्पद्यते तथापि एतत् दधि नेन्द्रप्रीतिकरं भवति । किंतु सोमदेवता प्रीतिकरम् भवति अत : दध्युत्पत्तौ विधानान्तरं पश्याम : लोके ये फला स्सन्ति प्रौढबदरफलानि एतै : कृतातंचनेन निष्पन्नं दधि राक्षसप्रीतिकरं भवति अत : शृतपयसि तंडुलानां निक्षेपेण उत्पन्नस्य दध्न : विश्वेदेवताप्रीतिकरत्वेन इत्यदामूतक्ररूपातंचनद्वारा निष्पन्नस्य दध्न : मानवप्रीतिकरत्वमेव अत : शृतेपय सि दध्ना आतंचनेन निष्पन्नं दधि देवेन्द्रप्रीतिक रमासीत् एवं षट्प्रकारै : निष्पन्नं दधि कस्य प्रीति करं कस्य न प्रीतिकरं ? इत्यत अतीन्द्रिय विज्ञाननिधिं वेदं विना न कोपि वक्तुं शक्नुयात् अत : इदमतीन्द्रियवि ज्ञानमवश्यं ज्ञातव्यम् भवति ।

हृद्रोग, वर्ग्य, निवर्तकमंत्रार्थ विचार :

"उद्यन्नद्य मित्रमहः। आरोहन्नुत्तरां दिवं।
हृद्रोगं मम सूर्य। हरिमाणं च नाशय।
शुकेषु मे हरिमाणं। रोपणाकासु दध्मसि।
अथो हारिद्रवेषु मे। हरिमाणं निदध्मसि।,,
कृ. य. तै. ब्रा. कां ३. प्र. ७. अ. ६.

उद्यन्नद्यमित्यादिमंत्राः रोगशान्त्यर्थं विनियोक्तव्याः। प्रस्कण्वमहर्षिः त्वग्दोषशान्त्यै सूर्यमस्तौत्। तेन स्तोत्रेण संतुष्टः सूर्यः तमृषिं रोगान्निरगमयत्। तस्माद् पुनापि रोगशान्त्यै एतैः मंत्रैः सूर्यः उपास्यनीयः। तदुक्तम् शौनकेन

"उद्यन्नद्येति मंत्रोयं सर्वपापप्रणाशनः।
रोगघ्नश्च द्विषघ्नश्च भुक्तिमुक्तिफलप्रदः॥ इति

षूस प्रेरणे इति धातोः निष्पन्नः सुवति प्रेरयति व्यापारेषु इति व्युत्पत्तिसिद्धश्चायं सूर्यशब्दः।

सर्वस्य लोकस्य प्रेरक ? हे सूर्य ? तव मित्रमह इति संबुध्यन्त विशेषणं पुनकमेवाकथ्यम् ? मित्रं महः यस्य तस्य संबुद्धिः मित्रमह इति अत्र मित्र इति मह इति पदद्वयमस्ति ञिमिदा स्नेहने इति धातोरुत्पन्नः सर्वभूतेषु मेद्यति स्निह्यति इति व्युत्पत्तिसिद्धः मित्रशब्दः सर्वभूतेषु स्नेहयुक्तो भवतीत्यर्थस्य बोधको भवति। मह्यते जनैरिति महः मह पूजायामिति धातोः निष्पन्नः "महस्तूत्सवतेजसोः,,

इति को आत्. उत्पन्न परत्वे अकारान्त : मह्ऽज्ञा
शब्द : तेज : परत्वे सकारान्त : प्रकृते तेज : परत्वात्
सकारान्तत्वमेव हे मितमह : सूर्य ? त्वं सर्वेषां अनु
कूल दीप्ति कुक : लोके मितमित्युक्ते अनुकूल इत्य
र्थ : सिध्यति। हे सूर्य, त्वं सर्वे त्वदीयां दीप्तिं सौ
ढुं यथा शक्नुवन्ति तथा प्रकाशयसीत्यर्थ : । अयं
सूर्य : उदयं प्राप्नुवन् सर्वान् प्राणिन : स्वकीयेन
तेजसा प्रति बोध्य प्राणिवर्गनिर्वर्तनीय सकल कर्म
कारणभूतो भवति । अतस्सर्वे एनं सूर्यं मितं मन्य
न्ते । तथा मत्वा एनं ध्यानादिना पूजयन्तिइति "उद्य
न्तमस्तंयन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो
विद्वान् सकलं भद्रमश्नुते ,, कृ·य·तै· आं, प्र·२-अ·२
एवं भगवती श्रुति : प्राह । अयं परिदृश्यमान :
आदित्य : ब्रह्मेति शास्त्रत : जानन् पुमान उदयन्तं
अस्तंयन्तं वा आदित्यं तथा ध्यायन् प्रदक्षिणं च
कुर्वन् वर्तते स : पुमान सकलं श्रेय : प्राप्नोति इति
श्रुत्यर्थ : । हे सूर्य ? त्वं उदयं गच्छन् उद्गततराम्
दिवं अन्तरिक्षं आरोहन् आभिमुख्येन प्राप्नुवन्
लक्ष्यसे । यद्वा दिवमन्तरिक्षं उत्तरामारोहन् उत्क
र्षेण प्राप्नुवन् लक्ष्यसे । दिवमित्यस्य यदा उद्गततरा
मिति विशेषणं तदा सर्वप्रदेशेभ्य : य : उन्नत :
महामहिमोपेतश्च पर्वत : मेरुरिति सुप्रसिद्ध :
तत्समीप संचारित्वं सूर्यस्य अवगतं भवति ।

"समहामिरुनजहाति" इतिश्रुतेः तदेवातदिवः उद्गततरत्वं बोध्यं। यद्वा उत्तरामित्यस्य उत्कर्षं कालं यदा तदा सर्वजगदावरक तिमिरं निवारयन् सर्व प्राणि वर्गस्य चैतन्य प्रदानद्वारा समस्तं जगदुज्जीवयन् सर्वप्राणि दृष्टिपथं प्राप्नोतीति इत्यर्थस्तामो भवति। उत्तरामित्यत उत् इत्यनेन उपसर्गेण स्वस्यं सूर्यस्यावर्थः लक्ष्यते तस्मादातिशायनिकः तरप्प्रत्ययः। प्रथमपक्षे अन्तरिक्षविशेषणत्वेन द्रव्यप्रकर्षप्रतीतेः आमु प्रत्ययः न भवति। द्वितीयपक्षे तु आरोहण प्रक्रियायाः प्रकर्षो गम्यत इति "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्ष इति" पा·सू· ५-४-११ आमु प्रत्ययः स्यात्

एवंविधः त्वं मम हृद्रोगं = हृदयगतमांतरं रोगं मानसीं पीडां विनाशय। तथा हरिमाणंच विनाशय। अत हरिमाण शब्दस्य शोकसमुद्भवं वैवर्ण्यं व्याधिप्रभवं वैरूप्यं चेत्यर्थं द्वयमाह श्री विद्यारण्यस्वामी। श्रीयद् भास्कराचार्यस्तु कालिमादि चर्मन्यायर्थमाह। एतत्सर्वं मे रोगजालं अद्यैव विनाशय। मांस्तोतारं एवंविध रोगेभ्यः विमोचय इति भक्तः सूर्यं प्रस्तौति।

किंच हे सूर्य! मदीयो यो हरिमाणरोगोऽस्ति तं शुकशारिकापक्षिविशेषेषु हरितालद्रुमेषुच स्थापयामः हरिमाण रोगोनाम रक्तदोषेण चर्मणि

कदाचित् वसंतकाले वृक्षगतनूतनपत्रेषु यो हरिमा दृश्यते तत्तुल्यतया शरीरकान्तिः भवति। कदाचित् हरिद्रातुल्यवर्णतया शरीरकान्तिः भवति तादृश रोगः यदा रक्तद्वारा शरीरे प्रविशति तदा नेत्रे मूत्रे च सः रोगः सुस्पष्टं अवगम्यते तदनुसारेण शरीरेपि दृश्यते। अयं रोगः स्वभावसिद्धां अस्मदीयशरीरकान्तिं अपहरतीत्यर्थः शुकादयः पक्षिविशेषाः केचन हरिद्वर्णं कामयमानास्सन्ति शुकेष्वपि स्त्रीपक्षिविशेषा एव विशेषतः हरिद्वर्णं कामयन्ते। तासु शुकीषु रोपणाका शब्दवाच्यासु शारिकासु च मदीयरोगसंप्राप्तं हरिद्वर्णं स्थापयामि। तथा हरिद्वर्णेपितेषु तालद्रुमेष्वपि मदीयं हरिमाणरोगं नितरां स्थापयामि सः हरिमा तेष्वेव सुखमास्ताम् अस्मान् माबाधिष्ट इति भक्तः सूर्यं प्रार्थयामास इत्यर्थः।
ननु प्रथममंत्रे हरिमाण शब्दस्य शोकसंताप वैवर्ण्य कालिमादिव्याधिप्रयुक्तवैरूप्यमित्यर्थ इमुक्तं। द्वितीयमंत्रे हरिमाण शब्दस्य तु रक्तद्वारा संप्राप्त हरिमा कश्चन व्याधिद्वारा संप्राप्तः शरीरे रूपान्तरप्राप्तको व्याधिविशेषः उक्तः। यद्यपि उभयोः मंत्रयोरपि हरिमाण शब्दः एक एव तथापि विभिन्नार्थकत्वकथनं किमर्थमिति चेत्

उच्यते श्रुताविकस्यैव हरिमाणशब्दस्य प्रयो
गेणैवालं तस्यैव यावन्तः अर्थाः तावतामर्थानां
वर्णनं कर्तुं शक्येत तथापि अन्यो शब्दद्वयं प्रयु
क्तं तदनुसारेण मंत्रतत्वज्ञो भाष्यकारोपि प्रथम
मंत्रे मनोद्वारा संप्राप्तव्याधिं चोक्त्वा द्वितीयमंत्रे स्वकगत
मेव हरिमव्याधिं बचिदर्शनयोग्यं चोक्त्वा वकव्यान
थीन् विभज्य प्रदर्शयामासेत्यर्थः। एवं संप्रार्थितः
सूर्यः उपासकानाम् ये आंतररोगाः हृद्रोगादयः
येबहिर्गता रोगाः हरिमाणादयः तान् सर्वान् नाश
यतीत्यर्थः॥

पुनः नेत्ररोग निवारक मंत्रार्थविचारः

"यन्म आत्मनो मिंदा भूदग्निस्तत्पुनराहार्जातवेदाः
विचर्षणिः पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्प
तिः पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः॥
कृ. य. तै. सं. कां ३. प्र. २. अ. ५

अनेनमंत्रेण आहवनीयाग्निप्रार्थना कर्तव्या
यज्ञानुष्ठानकाले मम ऋत्विजः यत् कर्तव्यं यज्ञां
गं तत् प्रमादेन विस्मृत्य न कृतं चेत् तदंगं हिंसि
तमिवाभवत्. अंगस्यहिंसायां अंगिनो यज्ञस्यापि हिंसा
अर्थप्राप्तैवभवति अग्निद्वारा कर्मांगलोपो यथाव
न स्यात् तथा अग्निप्रार्थना कर्तव्या भवति। "यन्म
मंगं पुनरग्निराहरतु.. इति प्रार्थमानोयग्निः

कथं ? कर्मांगलोपनिवारको भविष्यतीतिचेत्
यतोयमग्निः जातवेदाः विचर्षणिश्च । यत्र यत्र
यज्ञेषु यज्ञच्छिद्राणि संभवन्ति तानि सर्वाण्यपि
वेत्तीति जातवेदाः । न केवलं यज्ञच्छिद्रज्ञानमात्रेण
प्रयोजनमस्ति । किंतु तन्निवर्तनेपि सामर्थ्यभाव उक्तं
अतएव स्योग्निः "विचर्षणिः" इत्युक्तं नष्टं यज्ञांगं
पुनस्समाधातुं विचक्षण इत्यर्थः एवमग्निप्रार्थना
नकृताचेत् यज्ञांगनाशेन यागकर्तुर्यजमानस्य
चक्षुर्नाशः स्यात् यजमानः नेत्रहीनो भवेदित्यर्थः
"यज्ञंपराभवन्तं यजमानोनुपराभवति यदाज्येनपा
त्नीवतं संस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञंप्रतितिष्ठ
न्तं यजमानोनुप्रतितिष्ठति" इति अनुग्रन्थान्तरमस्ति
कृ. य. तै. सं. का. ६. प्र. ६. अ. ६.
इन्द्रः कदाचित् पात्नीवतसंज्ञके यूपे नियुक्तेन पशुना
मनुमयाजयदिति पात्नीवतपशुविधानि श्रूयते ।
ननु अस्य यूपस्य कथं पात्नीवतत्वं ? एकादशि
गत पत्नीसंयाजानन्तर भावित्वात् पात्नीवतत्वम् बोध्यं
सः पशुः त्वष्टृदेवताकः षांडः लोमशः पिंगलश्च तं
पर्यग्निकरणानन्तरमुत्सृजेत् तेन मनुः ऋद्धिंगतः
इत्युक्त्वा ततः यज्ञशेषं आज्येन समापयेत् इति श्रूय
ते तत्कथम् यावन्ति पशोः रवदानानि स्युः तावत्कृत्वः
आज्यस्य अवद्येत् पशुधर्म आज्यं भवति एवंच
सशेषं यदि न समापयेत् तर्हि यज्ञस्य प्रतिष्ठा राहित्यात्
यज्ञः पराभूतो भविष्यति पराभूतेन यज्ञेन पश्चात्
यजमान एव पराभूतो भविष्यति यज्ञस्य यजमानार्थत्वात्

प्रथमतः [illegible]  [illegible] पादितं भवति पश्चात् यजमान
पराभवः अवश्यं भावीत्यर्थः अतः यज्ञस्य प्रतिष्ठा
सिध्यर्थम् आज्येन पात्नीवतादि यज्ञशेषं समापयेत्
तदा यज्ञः प्रतिष्ठितो भवति तदनु यजमानोपि प्रतिष्ठि
तो भवतीत्यर्थः। एवम् यजमानेन प्रार्थितः अग्निः नष्टस्य
यज्ञांगस्य पुनः संपादनद्वारा यजमानाय चक्षुः दत्तवान्
भवति न केवलमग्नेरेव नष्टयज्ञांगसमर्पणे सामर्थ्यम्
किंतु इन्द्र बृहस्पत्योरपि देवतानामप्यस्तीति श्रुति
राह "पुनरिन्द्रो बृहस्पतिः" इत्यादिना। यथा अग्निः
नष्टयज्ञांगसाधकः तथा इन्द्रो बृहस्पतिश्च नष्टं
यज्ञांगं पुनः साधयित्वा यजमानाय पुनः चक्षुः
दत्तवन्तौ। अनन्तरं यजमानः अश्विनौ प्रार्थयति
"पुनर्मे अश्विनायुवं चक्षुराधत्तमक्ष्योः" इत्यादिना
हे अश्विनौ ! युवाम् मदीयाक्ष्णोः चक्षुराधत्तमिति
अत्र अक्ष्णोरिति पुनः चक्षुरिति अनर्थान्तरपद
प्रयोगः श्रुतौ श्रूयते तस्य वैशिष्ट्यं किमित्यालो
च्य भाष्यकाराः चक्षुःशब्दस्य दर्शनसामर्थ्यम
र्थमूचुः। तथाच अक्ष्णोः दर्शनसामर्थ्यं यजमानः
अश्विनौ प्रार्थयते इत्यर्थः। एवमेव लोकेपि कश्चः क
श्चित् नेत्रयोः दर्शनपाटवं कामयमानः एतन्मंत्र
जपतद्भावनादिभिः अग्न्यादिदेवताप्रसादात्
अवश्यं नेत्रयोः दर्शनपाटवं प्राप्स्यतीत्यत्र श्रुतिः
प्रमाणम्। अतएव महाभाष्ये पस्पशाह्निके पतंज
लिना महर्षिणा उक्तम् "शब्दप्रमाणका वयम् यच्छब्दः
आह तदस्माकम् प्रमाणमिति"। तस्मात् अतीन्द्रियवि
षये श्रुतिरेव शरणीकरणीया इति

## श्वेतकुष्ठ रोग निवारक मंत्रार्थविचार :

### नौत्राऽऽरण्यौषधिमहिमा

"पूर्वजन्मकृतं पापं व्याधिरूपेण बाध्यते। तच्छान्ति रौषधैः दानैः जपहोमसुरार्चनैः," इत्यार्षवचनानुसारम् पूर्वजन्मे तज्जन्मकृतं पापं रोगात्मनापरिणमते। तेन व्याधिना मानवः पीडितो भवति। तद्व्याधिनिवारणोपायेषु औषधसेवापि एकः उपाय इति प्राचीनैः महर्षिभिः प्रतिपादितोऽस्ति। औषधं नाम ओषध्याः भवं औषधं। ओषं दाहं धयतीति औषधं। ओषधिजन्यं ज्वरादिप्रयुक्त दाह निवारकं यत् तत् औषधमित्युच्यते। औषधस्य ओषधिभवत्वेन ओषधिस्वरूपं प्रथमतः ज्ञातव्यं भवति। "ओषध्यः फलपाकान्ताः" इति कोशात् व्रीहिकदल्यादीनां ओषधीत्वं ज्ञायते। फलपाक एव अन्तो यासां ताः फलपाकान्ताः। एताः व्रीहि कदल्यादयः फलपाकानन्तरं छिद्यन्ते। ओषः दाहः फलपाकः धीयते स्थाप्यते यासु ताः ओषध्यः फल समर्पिकाः इत्यर्थः। यद्वा ओषं दाहं धयन्तीत्योषध्यः दाहनिवारकाः इत्यर्थः। ईकारान्तः कोशप्रयुक्तः ईकारान्त तथा वेदे श्रूयते। इकारान्तत्वेवा ईकारान्तत्वे वा स्त्रीलिंगत्वमक्षतं। एतासामोषधीनां वैविध्यं श्रूयते श्रुतौ "प्रसूवतीः फलिनीरिति," काश्चन ओषध्यः पुष्पोद्गमपूर्वकं फलसहिता भवन्ति। ते

वानस्पत्या इत्युच्यन्ते वनस्पपति : वनस्पति :
तत्भवा : आम्रादय : वानस्पत्या : । अन्या : काश्चन
ओषधय : पुष्पैर्विना केवलफलै : पुष्का : पनसा
दय : वनस्पतय इत्युच्यन्ते । एवमेवाह कोशोऽपि "वा
नस्पत्य : फलै : पुष्पात्तैरपुष्पाद्वनस्पति : ,, इति ·
कृष्ण यजुर्वेद ब्राह्मणे श्वेतकुष्ठ रोग निवारक मंत्रा :
उक्ता : । तेषु मंत्रेषु कान्चन नील्या रव्या ओषधि : श्वेत
कुष्ठ रोग निवारणार्थं उपयोक्तव्या इतिस्मूयते ।
तस्या : ओषध्या : अभिमंत्रणं नक्तंजातासीति
पंचभि : मंत्रै : कर्तव्यं तस्मिन् ~~मंत्रे~~ अभिमंत्रणे
तदोषध्यधिष्ठान देवताप्रार्थना अवश्यं कर्तव्या
भवति । ओषधीषु तदधिष्ठातृदेवतास्सन्तीति शास्त्र
संप्रदाय : । तथा अभिमंत्रिता ओषधि : क्षिप्रं रोग नि
वारिणी भविष्यति । मंत्रप्रभावात् ओषध्य धिष्ठातृ
देवताप्रसादोऽपि रोगनिवारणे आनुकूल्यं संपाद
यिष्यति । अचेतनेष्वपि मृदादिषु "मृदब्रवीत ,,
"आपोऽब्रुवन ,, इत्यादि श्रुत्यनुसारं अभिमानिदेवता
व्यपदेशोऽस्तीति "अभिमानि व्यपदेशस्तु विशेषानु
गतिभ्याम् ,, इति : 2-1-5 ब्रह्मसूत्रे स्पष्टमुक्तम् ।
अत : ओषधीष्वपि अभिमानि देवतानां सत्वे
संदेहो न कर्तव्य : तेषु मंत्रेषु अयं प्रथमो मंत्र : ।
"नक्तंजातास्योषधे । रामे कृष्णे असिक्नि च ।
इदं रजनि रजय । किलासं पलितं च यत् ।
कृ · य · तै · ब्रा · कां 2 · प्र · ~~६~~ ५ · अ · ५

अस्मिन मंत्रे नीलारण्याणा: ओषध्या: रामे कृष्णे इत्यादीनि विशेषणानि। यद्यपि अस्मिन् मंत्रे नीली शब्द: नश्रूयते। तथापि असिक्नी पदार्थ पर्यवस्यनामेव नीलीमाह भाष्यकार: सायनाचार्य:। "नीलादोषध्यौ" इति वार्तिकेन ङीषि सति "नीली" इति शब्दनिष्पत्तिमाह भट्टोजिदीक्षित: सिद्धान्तकौमुद्याम्। तथाचेयं नील्या रण्या ओषधि: रोगनिवारणेन शरीरं रमणीयं करोतीति "रामा" इत्युच्यते यद्यपी यमोषधि: स्वयं कृष्णवर्णा अतएव यस्मिन् शरीर भागे श्वेतकुष्ठरोगोऽस्ति तस्मिन् भागे तद्रोगनिवारण द्वारा तं भागं कृष्णवर्णं संपादयतीति सा "असिक्नी" इत्युच्यते। तथाविधे हे नील्यारण्ये ओषधे त्वं नक्तं जातासि। अतएव अन्धकारवत् नीलवर्णा दृश्यसे किंच त्वं रंजनसमर्थासि अतएव तव "रंजनी" इति विशेषणमपि युक्तमेव हे रजनि त्वं स्वकीयेन वर्णेन रंजनक्षमासि तथाविधे हे औषधे त्वं इदं श्वेतं शरीरं स्वकीयेन वर्णेन रंजितं कुरु। यत् किलासं = श्वेतरोगग्रस्तमंगं यच्च पलितं = श्वेतवर्णवद्रोमादिकं तदुभयमपि रंजितं कुरु श्वेतवर्ण निवारणेन स्वकीय कृष्णवर्णयुक्तं कुरु इति नील्यारण्यामोषधिं अनेन मंत्रेणाभिमंत्र्य आमयावी कुष्ठरोग निवृत्त्यर्थं तामोषधिं प्रार्थयतेऽस्यार्थ:।

"किलासं च पलितं" इति द्वितीयमंत्रार्थं विचारयाम: "किलासं च पलितंति द्वितीयमंत्रार्थं विचारयाम:

कंचेदेवं दृषत्- शारीरक यच्चित रूपमस्ति तत = इतः अस्मात् शरीरात् निःशेषेण नाशय। स्वभावतः शरीरस्य यः स्वकीयः पूर्वसिद्धो वर्णः अस्ति स एव वर्णः अस्मान् आसमन्तात् व्याप्नोतु इत्यो ध्वोः प्रार्थ्यते।

ननु यावत् श्वेतवर्णः शरीरे दृश्यते तावत् शरीरे स्वकीयः पूर्वसिद्धो वर्णः कथमागमिष्यति? अतः रोगात् संप्राप्त श्वेतवर्णनाशं प्रार्थ्यते "परा श्वेतानि पातय" इति श्वेतरोग रूपाणि विनाशयेति पुनः प्रार्थ्यते श्वेत रूपे विनष्टे सति पूर्वसिद्धं रूपं देहं प्राप्स्यतीत्यर्थः देहः निर्गतरोगस्सन् पूर्ववत भासत इत्यर्थः।

"असितं ते निलयनमिति" तृतीयमंत्रार्थः विचार्यते हे नीलारव्ये ओषधे श्वेतव्याधि ग्रस्तं मदीयांगमेव तव लय प्राप्ति स्थानं। त्वं श्वेतव्याधिग्रस्ते मदीये देह भागे प्रविश्य तत्रत्यं रोग संप्राप्तं श्वैत्यं निर्मूल्य भव दीयं वर्णं तत्प्रवेशेन भवदीय वर्णः यद्यपि कृष्णः [illegible]न सुंदरः तथापि श्वैत्यनिर्मूलनार्थं प्रार्थ्यमानोऽ [illegible]ति सः कृष्णवर्णः गच्छति काले देहस्य यः स्वभाव सिद्धो वर्णः स एव कृष्णवर्णं निर्मूल्य संक्रमिष्यती त्यर्थः। किंच हे नीलारव्ये ओषधे तव प्रक्षेपणमात्रेण न केवलं मदंगानयवऽ एव कृष्णवर्णतामाप। किंतु तव प्रक्षेपण स्थानं यद्यदस्ति तत्सर्वमपि कृष्णवर्णं भवती त्यर्थः- अत आहुतौ "निलयना स्थान [illegible] शब्द द्वयं"

प्रयुक्तं अप्येते तनि तस्मिन् शब्दद्वयार्थं विचारिते सति " देहस्य श्वैत्य भागे हे ओषधे तव लयः यथा स्यात् तवमर्दनं तथा कर्तव्यम् । तथैव आसमन्तत् तिष्ठत्येतीति उपास्थानं निःशेषेण पूर्वरूपं विना उप वदीय रूपसंक्रान्तिः यथा स्यात् तथास्थितिरित्यर्थः लाभो भवति ॥ । लोके यथा नीलिप्रक्षेपेण श्वेतमपि वस्त्रं कृष्णं भवतीति प्रसिद्धं तद्वदित्यर्थः एतादृश स्थितयैव निलयास्थान शब्दयोः श्रुतिस्थयोः या रितार्थं संपन्नं भवति । अतएव हे ओषधे त्वं असिक्न्यसि, असितवर्णप्रापिकासीत्यर्थः । पृषत् = यत् स्वभावसि द्धात् भिन्नं श्वैत्यादिरूपं व्याधिवशात् मदीयदेहे संक्रान्तं तत् मदीयदेहात् निःशेषेण विनाशय

" सरूपानाम तेमाता ,, इति मंत्रार्थः

तथाविधे हे ओषधे ? तवमातृस्थानीया भूमिः यतः त्वं भूमौ उत्पन्नासि । अतस्तवमाता भूमिः भूमिसारूप्यं त्वयि दृश्यते तवकृष्णरूपत्वात् " यत्कृष्णं तदन्नस्य ,, इतिछान्दोग्यश्रुतेः भूम्याः कृष्णवर्णत्वं सुस्पष्टं ।
किंच तवपिता बीजविशेषः सोपि कृष्णवर्णतया त्वत्स मानवर्णस्सन् पितृस्थानतामापन्नः एतादृशामुभ मानवर्णतया तयोः मातापित्रोः समान त्पन्नात्वमपि कृष्णवर्णतया तयोः मातापित्रोः समान रूपासि कार्यकारणयोः समानरूपत्वं लोकप्रसि द्धमेव । हे नीलिमारच्यो ओषधे इदं श्वेतरूपग्रस्तं शरीरं त्वयासमानरूपं कृष्णवर्णं कुरु मातापितृसाम्यस्यत्वयि सत्वात् तव तादृशं सामर्थ्यं अस्तीतिभावः एवम् आमयाविनः ओषधिप्रार्थना ।

अस्थियजस्यपि मंत्रार्थविचार:

हे ओषधे मम देहे यः त्वचि संक्रान्तः श्वेतरूपव्याधिः सः अस्थिजदोषात् संक्रान्तो वा भवतु। मांसदोषात् संक्रान्तो भवतु। यद्वा परकीयाभिचारेण संप्राप्तो वा भवतु। एवं रीत्या संक्रान्तं यत् श्वेतवर्णलांछनं मम त्वचि दृश्यते तस्य सर्वस्य विनाशं कृतवानस्मि न केवलमहमेव कृतवानस्मि। किंतु ब्रह्मणा परमेश्वरेण अनुगृहीतस्सन् नाशितवानस्मि। हे ओषधे त्वं देवतास्वरूपिण्यसि त्वदनुग्रहोपि परमेश्वरानुग्रह एव। त्वदनुग्रहं विना कथमहं सर्वविधं श्वैत्यं निवारयितुं शक्नुयां हे नीलवर्णे ओषधे त्वदनुग्रहेण संतानुग्रहेण परमेश्वरानुग्रहेण च सर्वविधं मदंगसंक्रान्तं श्वैत्यं विनाशयामीत्यर्थः।

(*) अत्रेदं बोध्यं पाठक्रमानुसारेण " अस्थिजस्य किलासस्य, इति चतुर्थमंत्रः " सरूपा नामते माता ,, इति पंचमो मंत्रः तथापि " अग्निहोत्रं जुहोति ,, " यवागूं पचति " इत्यत्र पाठक्रमापेक्षया अर्थक्रमस्य बलीयस्त्वं यथा शास्त्रकारैः निर्णीतोक्तं तद्वदत्रापि पाठक्रमप्राप्तं चतुर्थमंत्रमतीत्य अर्थक्रमानुरोधाय पंचममंत्रार्थकथनानन्तरमेव चतुर्थमंत्रार्थः उक्तः। एवमेव वक्ष्यमाणमंत्रार्थविषयेपि एकवाक्यतासिद्ध्यर्थं इममेवन्यायं माश्रित्य रचना भविष्यतीति सूच्यते।

## सोबलौषधितत्वम्

यत्ते सुजाते हिमवत्सु भेषजम्। मयोभू शंतमा

यद्दुर्देषित्य । ततोनो देहि सौबले । अदो गिरिभ्यो अधिपर्वत्स्प्रधावसि । स॰ शोभमाना कन्येव शुभ्रे । तं त्वा मुद्गला हविषा वर्धयन्ति । स्वानस्सौबले रक्षिमा चाज ऐहि ॥ इति कृ॰ य॰ तै॰ ब्रा॰ कां २-प्र॰ ५-अ॰ ६॰

अस्मिन मंत्रे सौबला शब्दोऽस्ति सः वल्लीरूपां कांचन ओषधिमाचष्टे तस्याः ओषध्याः सौबलेति नाम । इय मोषधिः हिमवत्पर्वत सानुषु उत्पद्यते अतएव अस्याः सुजाते इति संबोधनं श्रूयते श्रुतौ । हिमवत्पर्वत सानुषु सम्यग् उत्पन्नत्वात् सुजातेति विशेषणं युक्तमेव तथाविधे हे सौबले ओषधे यतः त्वं सर्वप्राणिवर्गस्य हृदयेषु ये उपद्रवाः = बाधास्सन्ति त्वत्सेवया तादृशो पद्रव निवारण कारणमसि । किंच त्वत्सेवाद्वारा सुख कारणभूताचासि । हे सौबले = एतत्संज्ञके हे ओषधे त्वदीयं यत् यत् भेषजं रोगविनाशकं भवति । अतः तादृशमौषधं भवदीय मस्मभ्यं देहि । किंच हे सौबले ओषधे त्वं पर्वतेभ्यः सकाशात् लोकप्रत्यक्षं यथा भवति तथा अधिकं वल्लीरूपासती सर्वतः प्रसरसि । अत्र कश्चन दृष्टान्तः उच्यते सर्वतः प्रसरसि । यथा सर्वैराभ्र शुभ्रा " स॰ शोभमाना कन्येति ॥ यथा सर्वैराभ्र शुभ्रा " स॰ शोभमाना कन्या गृहाभ्यन्तरात् स्वैः सम्यक् शोभमाना कन्या गृहाभ्यन्तरात् बहिरागत्य स्वयं वरार्थमागतानां वराणां पुरतः संचरति तद्वत् त्वमपि वल्लीरूपत्वात् पर्वतेभ्यः संचरति तद्वत् त्वमपि वल्लीरूपत्वात् पर्वताग्रेभ्यः संचरति तद्वत् त्वमपि वल्लीरूपत्वात् पर्वताग्रेभ्यः सकाशात् अधस्तादागत्य रोगनिवारणार्थं त्वद्गृह सकाशात् अधस्तादागत्य सम्यक् शोभमाना सती संचरसि पीड्यू नाम पुरतः सम्यक् शोभमाना सती संचरसि

अपिच हे ओषधि देवते यतस्त्वं निर्मला अतः तादृशीं त्वां मुद्गलगोत्रोत्पन्नाः महर्षयः हविर्दान द्वारा वर्धयन्ति हे सोबलाख्ये ओषधिदेवते ?.

सारं इदं-- अनारोग्यनिवृत्त्याख्ये अस्मिन् सोबलादेवताके कर्मणि अस्मभ्यं धनं संपादय इति प्रार्थ्यते। अनारोग्यनिवृत्त्याख्ये सोबलादेवताके कर्मणि धनंनाम रोगनिवर्तकं आरोग्यसंपादकमौषधमेव। तादृशं धनं देहीत्यर्थः। आरोग्यकामो यजमानः रोगनिवृत्तिपूर्वकं आरोग्यसिद्ध्यर्थं सोबलाख्यामोषधि देवतां प्रार्थयते इत्यर्थः

## औषध विज्ञानम्

## ओषधि स्वरूपकथनम्

महाग्निचयनक्रतौ " ओषधीर्वपति ब्रह्मणान्नमवरुन्धे। इति कृ.य.तै. सं कां 5-प्र.2-अ. 5

श्रुत्या मंत्रोच्चारणपूर्वकमोषधि निक्षेपेसति मंत्रसामर्थ्येन यागकर्ता अन्नमवरुणं प्राप्तवान् भवति इत्युक्तं। तत्रयेमंत्राः ओषधिवापार्थं विनियुज्यन्ते महाग्निचयनक्रतौ तेमंत्राः चतुर्दश संख्याका इति गण्यन्ते। यद्यपि महाग्निचयनक्रतौ ओषधिवापार्थं इतोऽपिबहवो मंत्रास्सन्ति। तथापि मंत्राणां चतुर्दशसंख्यास्वीकारे श्रुतिरेवमाह " चतुर्दश एतेषां चतुर्दशसंख्यास्वीकारे ... सप्तारण्या उभयीषाम विर्वपति सप्तग्राम्या ओषधयः प्रियंगवणवो गोधूमा मसूर्यो:, इति. तिलमाष व्रीहि यवाः प्रियंगवणवो गोधूमा मसूर्यो इति सप्तग्राम्या ओषधयः वेणुश्यामाक नीवार जर्तिलाः श्चेति सप्तग्राम्या ओषधयः वेणुश्यामाक नीवार जर्तिलाः गवीधुका मर्कटका गरुल्मताश्चेति सप्त आरण्या ओषधयः इति मंत्र संख्यापितर्थं यः आह स चतुर्दश बीजपर: अतःओषधि शब्द: बीजपर: नाना बीजावापेन यजमानः नाना बीजा नानाविधान्नप्रापक बीजावापेन यजमानः नाना विधमन्नं प्राप्तवान् भवति महाग्निचयनेक्रतौ कृष्टप्रदेशे

ग्राम्याणाम् तिलमाषादीनामोषधीनां निक्षेपः अकृष्टे प्रदेशे आरण्यानां वेणुश्यामाकादीनां ओषधीनां निक्षेपः इति "सप्त ग्राम्याः कृष्टे सप्तारण्याः अकृष्टे" इति सूत्रकाराणाम् वचनानुसारेण ज्ञायते। कृष्टे देशे ग्राम्याणामोषधीनां निक्षेपविषये कंचनविशेषं विधत्ते श्रुतिः "कृष्टेवपति कृष्टे ह्योषधयः प्रतितिष्ठन्ति" इति कृष्टे देशे ग्राम्याणां तिलादीनाम् निक्षेपे सति ओषधीनां ग्राम्याणां प्रतिष्ठा भवति प्रतिष्ठानाम ओषधि मूलानां सर्वतः प्रसरणे दृढावस्थानं प्रतिष्ठा। अनन्तरं बीजावापे विधानं प्रस्तौति श्रुतिः "अनुसीतं वपति प्रजात्यै द्वादशासु सीतासु वपति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नं पचति" इति ५-२-५ कृष्टे क्षेत्रे याः सीताः लांगलपद्धतयः सन्ति तासु सीतासु मूलमारभ्य अग्रपर्यन्तं बीजावापः कर्तव्यः सः प्रभूतत्वेन उत्पत्ति कारणम् भवति तत्रापि द्वादशसु सीतासु बीजावापः कर्तव्यो भवति तथात्वे सति संवत्सरस्य द्वादशमासत्वात् बीजावापदिनमारभ्य ओषधीषु फलनिष्पत्तिकालः संवत्सरः ओषधयः संवत्सरकाले याग कर्ते यजमानाय अन्नं दास्यन्तीत्यर्थः तादृश बीजावा

प्रमंत्रेषु प्रथमोयं मंत्रः

"याजाता ओषधयो देवेभ्यस्त्रियुगं पुरा। मंदामि बभ्रूणामहं शतं धामानि सप्त च।" कृ.य.तै.सं.कां ५.प्र.२.अ.६

अस्मिन मंत्रे युग शब्दोऽस्ति सः युगशब्दः यद्यपि "द्वि इतिकोशात् द्वादश वर्ष सहस्रैः द्वादशभिः दैवतं युगम्" इतिकोशात् द्वादश दिव्य वर्ष सहस्र परिमित कालपरः। तथापि अत्र भाष्यकारैः श्रीविद्यारण्य स्वामिभिः सामान्यकालपरतया युग विशेषणतया स्थितया श्रुतिस्थया त्रिव्याख्यातः ~~काल~~ विशेषणतया स्थितया श्रुतिस्थया त्रिसंख्यया "वर्षाः, शरत, वसंत इति कालत्रयमुक्तं एतत्कालत्रयम् द्वि उप सृष्ट्यादौ देवेभ्यः सकाशात् ओषधयः

समुत्पन्नाः एतत्कालत्रयापेक्षया बहूनां कालानां सत्वेपि
बीजावापस्य योग्यः कालः वर्षर्तुरेव बीजावपस्य प्रकृ
तत्वात् बीजावापस्य वर्षर्तोः मुख्यत्वात् "वर्षाः शरत्
वसंतः" इतिगणितेषु ऋतुषु वर्षाकालस्यैव प्रथमतः
परिगणनं भाष्यकारस्य संगच्छते। नोचेत् ऋतुषु
वसन्तस्यैव प्राथम्यात् "वसन्तः वर्षाः शरत्" इति
वसन्तस्य प्राथम्येन परिगणना क्रियेत न तथा कृतं
तथाच वर्षर्तौ बीजेषु भूम्यां निक्षिप्तेषु सत्सु अनंत
रकाले फलग्रहणं भवति। वर्षाकाले बीजनिक्षेपा
भावे आसंवत्सरं अन्नं न लभ्येत। अतः वर्षा इति
वर्षर्तोः प्राथम्यं परिगणितेषु वक्तव्यं। ततः व्रीहीणां
फलकालः प्रायशः शरत्कालः। अतएव "शारदि
व्रीह्याग्रयणं" इत्यादि कल्पसूत्रकाराणां विधानानुसारम्
नूतनधान्यैः शरत्काले देवतोद्देशेन हविर्दानं च भवति
तथैव बहूनां वृक्षाणाम् फलकालः वसन्तर्तुः चूतफ
लानां तत्कालेएव उपलभ्यमानत्वात् अतः सर्वसा
धारणतया भाष्यकारैः "वर्षाः शरत् वसन्त" इति
कालत्रयं स्वीकृतं। ताश्च ओषधयः शतसंख्याकाः
सन्ति नकेवलं शतसंख्याकाः अनन्तसंख्याका अपि
सन्तीति वक्तुं सुवचम्। तथापि ग्राम्यानामोषधीनां सप्त
संख्या आरण्यानामोषधीनांच सप्तसंख्या विशेषतः उक्ता
एता ओषधयः सर्वप्राणिवर्गस्यापि जीवनार्थं पर्याप्ताः
भवन्ति। किंच एताः ओषधयः प्ररोहकाले रक्त
वर्णाः तदनंतरकाले हरिद्वर्णाः दृश्यन्ते। ताएव पुनः
कालक्रमेण पिंगलवर्णतया परिणामं प्राप्नुवन्ति।
तादृशवर्णैः तादृशसंख्याभिश्च संप्राप्ताः ओषधीः

अहं दृक्ष्यामि इति मंत्रकृद्वचनं यागकर्तृवचनं वा अध्वर्युवचनं वा वयमपि तथैव तां दृश्यवृक्षसंपत्तिम वेक्ष्य आनंदयुक्ताः भवाम ः

ओषधिस्वरूपकथनप्रसंगे उच्छुष्मा ओषधी नामिति मंत्रार्थं विचारयाम ः। यथा गावः स्वनिवासस्थानात् गोष्ठात् गृहात् अरण्यदेशं प्रत्युद्गच्छन्ति। तद्वत् ओषधीनां तदुपभोगजन्याः बलविशेषा अपि उद्गच्छन्ति। कथं? हे यजमान? एताः ओषधयः स्त्रीपुरुषलक्षणैः अस्माभिः भुज्यमानास्सत्यः अस्मच्छरीरेषु शुक्लशोणितरूपेण परिणामं प्राप्नुवन्ति ततः वदेव शरीराकारेण परिणतास्सत्यः तव आत्मानं यन्नं शरीरलक्षणं दास्यन्ति पुनः जन्मकारणभूताः भवन्तीति तात्पर्यं। अस्माकं जन्म संप्राप्यत इत्युक्ते तस्य जन्मनः मातापित्रौः शुक्लशोणिते एव करणम् तदुभयमपि मातापितृभुक्तानां व्रीहिगोधूमाद्योषधीनां स्यारभूतमेव तथाच स्त्रीपुरुषगत शुक्लशोणितद्वयं ओषधिबलरूपमित्येव पर्यवस्यति। तत् बलमू भुक्ताभ्यः ओषधीभ्यः बहिरागच्छति। अतएव श्रुत्याउक्तम् "उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरत इति,,

ओषधीनां नानात्वविचारः

"पुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वाइव सजित्वरीः वीरुधः पारयिष्णव ः,, कृ॰य॰तै॰सं ५-२-६

अस्मिन् मंत्रे नानाविधैः विशेषणैः ओषधयः प्रशस्यन्ते काश्चिदोषधयः पुष्पमात्रपर्यवसायिन्यः नतु फलन्ति ताः यथा मल्लिकामालत्याद्यः पुष्पलताः उच्यन्ते। तथा अन्याः काश्चन ओषधयः पुष्पपूर्वकं यथा तथा फलोत्पत्ति पर्यवसायिन्यः चूतादयः। एताहि पूर्वम्

पुष्पिण्य: पश्चात् फलिन्य: एवम् पुष्पफलोभय विध सौभाग्योपेता इत्यर्थ:। अन्या: काश्चन ओषध्य: पुष्पैर्विना केवलफलै: संयुक्त: भवन्ति। यथा औदुंबरपनसादय: एता ओषध्य: प्रथमत: पुष्परहिताअपि फलसहिता: दृश्यन्ते। अन्या: काश्चन, ओषध्य: फलेन तद्धेतुभूत पुष्पेणच रहिता: शमीवृक्षादय: पुष्पफलोभयविध सौभाग्य रहिता: इत्यर्थ: एवम् लोकानुसारेण एतादृशीनामोषधीनां उदाहरणानि द्रष्टव्यानि। अपरा: काश्चन ओषध्य: केवललतारूपिण्य:। एता: फलपाकान्तत्वं परित्यज्य पत्रदानेन लोकोपकारं कुर्वन्त्य: बहुकालं तिष्ठन्ति। तादृशस्वभावा: काश्चन तांबूललता प्रभृतय: लोके दृश्यन्ते एतास्सर्वा ओषध्य: जयशीला: भवन्ति। यथाकृषकं बहव: अश्वा: उद्भ्रांगत्वा जयशीला: भवन्ति तथैव बह्व्य: सद्योत्पन्ना: फलपर्यन्त लक्षण जय ओषध्योपि बह्व्य: सद्योत्पन्ना: फलपर्यन्त लक्षण जय शीला: भवन्ति।

ओषधीनां नानात्वविचारे "अश्ववतीं सोमवतीं," इतिमंत्रार्थं विचारयाम: काचिदोषधिजाति: अश्वा अस्यां सन्तीति अश्ववती इति व्यवह्रियते अश्वा: अस्यां सन्तीति अश्ववती कस्यचित भूस्वामिन: स्वीयक्षेत्रे व्रीहीणांवा माषाणांवा अन्यासामोषधीनांवा फलोत्पत्ति: यदा अधिका आसीत् तादृशसस्येन यदा अधिकं धनं लब्धवान् तदा तेनधनेन अश्वा: संपादिता: भव न्ति एवमश्वलाभ: तस्य भूस्वामिन: भवतीत्युक्ते अोषधिद्वारैव भवति तत्कारणं ओषधय एव अत: ताम् ओषधिजातिं अश्ववतीमित्याहु: नकेवलमेकधावा

द्वारयां वा औषधीभ्यां अउवलाभो भवति होत

स्य अर्वौषधीभिरेव भवति। तद्द्वारासंप्राप्तधनैरेव

अउवलाभो भवतीति सूचयितुमेव भाष्ये भाष्यका

रा: "काचिदोषधिजाति: अउवावती" इति जातिपदं

संयोजयामासु:। अन्याकाचिदोषधिजाति: सोम

वती इत्युच्यते सोमयाग: अस्यामस्तीति सोमवती

धान्यसमृध्यौ सत्यां धनलाभो भवति तेन धान्येन धनेन

च सोमयाग: अनुष्ठातुं शक्यते इत्यर्थ: अत: तामो

षधिजातिं सोमवतीमाहु: श्रुतिविद:। अपराकाचिदोषधि

जाति: ऊर्जयन्ती इत्युच्यते ऊर्जं = बलं प्राणचेष्टां वा

करोतीति ऊर्जयन्ती यस्या औषध्या: भक्षणेन प्राण

चेष्टा इन्द्रियबलं च शरीरबलमपि समृद्धं भवति तदा

जीव: लोके सम्यक् व्यवहर्तुं शक्नोति तादृशव्यवहारकारणं

या ओषधिजाति: भवति तामोषधिजातिं ऊर्जयन्तीमि

त्याहु श्रुति:। किं च यस्या: ओषधि जात्या: भक्षणेन

शरीरे अष्टमधातु रूपं ओज: उत्कृष्टतया वर्धते

सा ओषधिजाति: अन्नद्वारा शरीरधातून् पोषय

सा ओषधिजाति: अहं लब्धवानस्मि इति

तोत्पर्य: तास्सर्वा ओषधी: अहं लब्धवानस्मि इति

अध्वर्यु: वदति। अयं ऋत्विक् यागेप्रधान: स: सर्वदा

अध्वर्यु: वदति। अयं ऋत्विक् यागेप्रधान: स: सर्वदा

याग कर्तु: श्रेयसे प्रयतते। क्षुधादि दु:खराहित्य

साधनानि एतास्सर्वा ओषधय इति यजमानस्य दु:ख

राहित्यार्थमेव एतास्सर्वा ओषधी: प्राप्तवानस्मि इति

ओषधीनां सीतासु निक्षेपसमये वदतीति ज्ञेयम्।

ओषधीनां देवतात्मकविचार:

अउवत्थो वो निषदनं पर्णे वो वसति: कृता। गोभाज इ

किलासथ यत्सनवथ पूरुषं" कृ. य. तै. सं ४-२-६

हे ओषधि देवताः युष्माकं निवासयोग्यं गृहं अश्वत्थवृक्षः पलाशवृक्षश्च तादृशवृक्षेषु निवासस्थानं कल्पयित्वा तत्र यूयं निवसथ। देवताधिष्ठितत्वादेव लोके अश्वत्थवृक्षः प्रदक्षिणनमस्कारादिभिः पूज्यते।

ननु अस्मिन् स्थावरजंगमप्रपंचे वृक्षाः स्थावराः इति प्रसिद्धिरस्ति। कथमेते स्थावराः पूजार्हाः भविष्यन्ति? चेतनाः खलु पूजार्हाः इति संप्रदायः श्रूयते इतिचेदुच्यते। यद्यपि अश्वत्थादीनां स्थावरात्मकत्वं नास्तीति नोच्यते अथुना देवतात्मत्वमपि अस्तीत्युच्यते। अतएव महाकविः कालिदासः कुमारसंभवमहाकाव्यप्रारंभे "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः" इत्युवाच। तत्र हिमालयस्य स्थावरत्वेपि देवतात्मत्वमपि अस्तीति महाकविना कालिदासेन उक्तं बोध्यं। तथैव पलाशवृक्षोपि पूज्यत्वादेव इत्यादिरूपेण कर्मसाधनं संपन्नः

ननु "अश्वत्थेवोनिषदनं" इति उक्त्वा ओषधिदेवताः ओषधीष्वेव सन्तीति उक्तं। लोके तु भूम्यां भूत्वा भूम्यामपि सन्तीति श्रूयते कतरत्सत्यमिति चेदुभयमपि सत्यमेव। पूर्वोक्तश्रुत्युक्तरीत्या देवतारूपेण अश्वत्थादिवृक्षेष्वपि ओषधिदेवताः सन्तीति ज्ञायते "गोभाज इत्किलासथ" इति उक्तरीत्या स्थावररूपेणभूम्यामपि सन्तीति वेदप्रसिद्धोविषयः लोकप्रसिद्धिंगतः।

ननु ओषधिदेवतानां भूम्यां स्थितिः किमर्थं? इतिचेदुच्यते ओषधिदेवताः मानवानां अन्नदानेन पोषणार्थमेव भूम्यां सन्ति। व्रीहियवमाषमुद्गगोधू

मादि पदार्थाः ऽस्माकं अन्नं । तदभावे अन्नाभा
वः । अतः अस्माननुगृहीतुमेव स्थावरात्मना
भूम्यामपि ओषधिदेवतास्सन्तीति बोध्यम् ।

संजीवन्योषधि महिमा

'ओषध्यस्सोम राज्ञीः प्रविष्टाः पृथिवीमनु
तासां त्वमस्युत्तमा प्रणो जीवातवे सुव । अवपतन्ती
रवदन्दिव ओषधयः परि । यंजीवमश्नवामहै
नसरिष्यातिपूरुषः ॥ कृ.य.तै.सं.कां ५-प्र.२-अ.६

सोमः ओषधीनामधिपतिरिति श्रुतिमर्यादानुसारम्
सोमः राजा यासां ताः ओषधयः सोमराज्यः भवन्ति।
तादृश्यः ओषधयः प्राणिवर्गस्य अन्नार्थं पृथिवीमनु
प्रविष्टा भवन्ति । तासां मध्ये अधुना महाग्निचयने कृतौ
अध्वर्युणा सम्यक् कृष्टप्रदेशे सीतासु याः ओषधयः
ओप्यमाना: भवन्ति ताः उत्तमाः ओषधयः भूमौ
रोहन्ति काश्चन ओषधयः अरण्ये रोहन्ति ।
काश्चन ओषधयः पशुभिः भक्ष्यन्ते काश्चन नैके
नापि भक्ष्यन्ते केवलं जीर्णास्सत्यः शिथिला भवन्ति।
काश्चन यज्ञेषूपयुज्यन्ते । काश्चन ब्रह्मविद्भिः उपभु
ज्यन्ते एवमोषध्यो भिन्नास्सन्ति तासु याः ओ
षधयः यज्ञेषु देवताप्रीत्यर्थं होमयद्रव्यतां प्राप्नुवन्ति
तथैव ब्रह्मविदां ब्रह्मसाक्षात्काराय मुक्तिवारणार्थं
अन्नसाधनभूता भवन्ति । तासां जन्म श्लाघ्यते । अतएव
श्रुतिरत्र तादृशीरोषधीः उत्तमत्वेन "तासां त्वमस्यु
त्तमा" इति प्रशशंस । अतः हे उत्तमे हे ओषधे त्वं
अस्माकम् प्रकर्षेण प्रेरय । अस्माकम्
अस्मान् जीवनौषधाय प्रकर्षेण प्रेरय । अस्माकम्
अस्मान् जीवनौषधाय, इयं संजीवन्यो
जीवनौषधिः त्वं भव ओषधीव, इयं संजीवन्यो

षधि: इतिज्ञायो अनन्तर उपरिमंत्रे "यज्जीवस्य अत्र अस्य
हे नासरिष्यति पुरुषः" इतिवाक्यादपि संजीवन्योष
धिविज्ञानं तदिति गम्यते। अतः हे औषधे त्वमस्याकं
संजीवन्योषधि भवेति प्रार्थना
स्वर्गलोकस्य उपरितनप्रदेशात् अधस्तात्
भूमौपतिता वृष्टि बिंदवएव औषधिरूपेण उत्पन्नाः।
उत्पत्त्यनन्तरं ता ओषधयः ×तदधिमानिदेवताः एवमवदन् "यं पुरुषं
प्राप्नुमः सः पुरुषः नैव विनश्यतीति" अस्मत्संबन्धः
येषांजीवानामस्ति तेजीवाः न नश्यन्ति इति" ओषधीनां
प्रतिज्ञाश्रूयते इयमोषधिः संजीवनी। जीवनकाले अ
स्याः ओषध्याः संबन्धियति पश्चात अस्माकं मरण
राहित्यमेव प्रयोजनमस्या ओषध्याइति वक्तव्यम्।
किंतु मृतमपि जीवं पुनः संजीवयति इत्यपि मृतसं
जीवन प्रयोजनमपि अस्या अस्तीति वक्तव्यं। श्रीम
द्रामायणे श्रूयते युद्धकांडे इन्द्रजिता रामादीन्प्रति
ब्रह्मास्त्रेप्रयुक्ते सति द्वित्रिपुरुषान् विना सर्वेब्रह्मास्त्र
बध्या आसन् तदा आंजनेयंप्रति जांबवान् हे आंज
नेय अधुना भवान् संजीविपर्वतं प्रतिगत्वा संजी
विक अधुना भवान् संजीविपर्वतं प्रतिगत्वा संजी
नेक अधुना भवान् संजीविपर्वतं प्रतिगत्वा संजी
विका ओषधीरानय। ताभिर्विना अधुना नान्यांगतिं
पश्यामि अतः ओषधींगत्वा ओषधीरानय इत्यादि
पश्यामि अतः शीघ्रंगत्वा ओषधीरानय इत्यादि
देश तत्समये तत्पर्वतस्वरूपमेवमवोचत् जांबवान्
हनुमंतंप्रति।
"मृतसंजीवनीं चैव विशल्यकरणीमपि,"
"सावर्ण्यकरणीं चैव संधानकरणीं तथा," इति।
सावर्ण्यकरणी चैव संधानकरणीं तथा मध्ये
तस्मिन् पर्वतेस्थितासु अनेकासु ओषधीषु मध्ये
यत सूत्रां ओषधीनां नामान्युक्तानि तासु ओषधी
यत सूणां ओषधीनां नामान्युक्तानि तासु ओषधी
प्रमथ्ये एका "मृतंसंजीवयतीति मृतसंजीवनी,"

द्वितीया जीवनाधारं संरक्षणमिति वा विशल्यं करोती
ति विशल्यकरणी । विशल्ये कृते सति वर्ण : संधानं
करोतीति संधानकरणी तृतीया । ततः व्रणकृत
विवर्णं नाशयित्वा अव्रणशरीर समानरूपत्वं करो
तीति सावर्ण्यकरणी चतुर्थी इति। अनंतरं आंजने
यः संजीविपर्वतमेव आनिनायेति श्रीमद्रामायणा
त् ज्ञायते ।

ननु स्वर्गस्योपरितनप्रदेशात् भूमौ पतित वृष्टि
बिंदवः कथं औषधपर्वतेन संजाता: ? लोके ये वृष्टि
बिंदवः भूमौ पतंति तान् पश्यामः ते वृष्टि बिंदवः औ
षधयो भवन्ति इत्यस्माकमनुभवः नास्ति कथमिदं
संभवति इति चेत् उच्यते

कृष्णयजुर्वेद ब्राह्मणे " अंगिरसोवै सत्रमासत ॥
इत्यादिकं श्रूयते । तत्र अंगिरानाम महर्षिः अस्ति ।
सः अथर्ववेद प्रवर्तको चार्यः । तस्य कुले उत्पन्नाः
सर्वेऽपि अंगिरसः ते अंगिरोगोत्रोत्पन्नाः यदा
सर्वेऽपि अंगिरसः ते कांचित् श्वेतागौः घर्म
सत्रयागमन्वतिष्ठन् तदा तेषां काचित् श्वेतागौः घर्म
युगासीत् यज्ञे प्रवर्ग्याख्ये कर्मणि गोपयसः अपेक्षा
अस्ति तस्य गोपयसः घर्म इतिनाम घर्मशब्दः तत्र
अनेकधा प्रयुक्तो दृश्यते । तथापि घृतसहितं क्षीरं घर्मः
इति एकतन्निर्वचनमस्ति घर्मरूपं पयः दोग्धीति
घर्मधुक् गौः तस्याः अरण्ये तृणालाभात निष्पीडित
रसत्व सोमस्य यात् न जीवमस्ति तद्भक्षणेन सा
गौः जीवति तदा कृपाल्वः अंगिरसः परस्परमिद
मब्रुवन् येनयं अस्याः गोः भक्षणाय तृणविशेषानपि
असमर्था इत्येवं वलकत्वं । तादृशाः
नौसादयामास्त्रिमा तदा असमर्था इत्येवं सलकत्वं । तादृशाः
गोसादयामासिमा तदा स्त्रैरप्रयोजनाय सत्रयागमनुतिष्ठामः ?
असमर्था नयं कारेंप्र

ऋषिकामैर्हि सत्रयाग: अनुष्ठेय: गौगा समपि संपादयितुमशक्तानामस्माकं कानाम अन्यासमृ द्धिः स्यात्? इतिमत्वा पश्चादालोच्य कारीर्यी यज्ञानुष्ठानेन वृष्टिं संपादयामासु: तस्या: वृष्टे: भू मौ पतनकाले यावन्तो जलबिंदव: तावन्त: औषध्य: उत्पन्ना: आसन्। अनन्तरं या औषधय: वृष्टिबिंदुपरिणामेन उत्पन्ना: ता: पितृदेवताभि: विषेणलेपिता: आसन्। इदं नकेनापि ज्ञातं। तासामो षधीनां मध्ये किमपि तृणं भक्षयित्वा सायम्र्भुक् गौ: विषदोषेण पीडिता सती सत्रयागस्थलं प्रति आज गाम तथाविधां दृष्ट्वा ते अंगिरस: कोनाम इत्थम स्या: गो: अपकारं कृतवान्? इति विचारयामासु:। तदा पितृदेवता: वयमेव तथा अकुर्म इत्यब्रुवन्। यदि अस्माकमपि कर्मसु हविर्भागलाभ: भविष्यति तदापुन: औषधीनां स्वादुत्वं संपादयिष्याम इति अब्रुवन्। एवं पितृदेवताभि: पृष्टा: अंगिरस: पितृणां अग्निहोत्रे एव कर्मणि "प्राचीनावीती, स्वधापितृभ्य: पितृन् जिन्व" इति "दक्षिणेन वेदिं भूम्यां लेपं निमृ ज्य" इति सूत्रकार विधानानुसारं लेपमार्जनरूपं भागं अददु:, तेन संतुष्टा: पितर: विषमपनीय ता औषधी: स्वदूकृतवन्त: इत्येवं वृष्टिबिंदुभ्य: औषधिजन्मे ति इदमत्यद्भुतं करमतीन्द्रिय विज्ञानं पितृदेवतानां अग्निहोत्रकर्मणि लेपमार्जनभागार्थं औषधय: पितृभि: विषलेपिता: ततो देवै: पितृणामिच्छानुसारं तस्मिन्भागे दत्ते सति पुन: पितृभि: औषधय: स्वदूकृता: इतियेषां औषधिविषापनयनज्ञानमस्ति तेषामोषधय: स्वादुभूता: भविष्यन्ति एवं संजीवन्योषधिमहिमापि वर्णिता:

(margin: अनुभाष्य)

# ओषधिप्रार्थना

"अन्यावो अन्यामवत्वन्यान्यस्या उपावत। तास्सर्वा ओषधयस्संविदाना इदं मे प्रावताबचः" कृ.य.तै.सं ५-२-६

हे ओषधयः युष्माकं मध्ये अन्याकाचित् ओषधिव्यक्तिः अन्यामितरामोषधिव्यक्तिं रक्षतु। तथा रक्षिता सा ओषधिव्यक्तिरपि अन्यस्याः ओषधिव्यक्त्याः समीपमागम्य तां व्यक्तिं रक्षतु। एवं परस्पर रक्षकत्वमुचितं हे ओषधयः परस्परमैकमत्यं प्राप्ता यूयम् इदं मदीयं प्रार्थनारूपं वाक्यं रक्षत।

अस्य मन्त्रार्थं विचारयाम:

हे ओषधयः भवत्यः किमर्थमुत्पन्नाः इति प्रश्नस्य समाधानं क्षुधादिकं निवारयितुमेव उत्पन्ना इति वक्तव्यं तथा च भवतीनामुत्पत्तिनिमित्तं क्षुधादिविनाशनमेव। क्षुधाद्यभावे भवतीनामुत्पत्तिरनावश्यकी अतः युष्माकं क्षुधादि विनाशनमेव माता। माता यथा उत्पत्ति निमित्तं तद्वत् भवतीनामुत्पत्तावपि क्षुधाद्युपनयएव निमित्तमित्यर्थः। अतः भवत्यः स्वकर्तव्ये अर्थे अत्यन्तं कुशलाः क्षुधादिनिवारणं कृत्वा कृतकर्तव्याः भवत इति बीजावापकाले यागकर्ता ओषधीस्संबोध्य वदति। किंच हे ओषधयः वार्धकेवयसि भवत्यः फलरूपेण अवस्थिताः स्वस्याः पुनरुत्पत्तौ फलरूपेणैव कारणभूता भवन्ति लोके काश्चन ओषधयः बीजादुत्पद्यन्ते काश्चन फलादुत्पद्यन्ते। फलाश्वत्थः फलादेवोत्पन्न इति "तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्. कृष्णयजुर्वेद ब्राह्मणे स्पष्टमुक्तम्

अतः भवत्योपि पतादेव पुनः उप्त कृष्यन्त इति श्रुतिरस्य पततिणीरिति विशेषणस्य पत्नात् प्रयाग मनोपेता इति अर्थमाहुः आर्ये भाष्यकाराः।
तादृश्योभवन्त्य: यत क्षुध्यादिकं रोगवत् बाध्यते तत क्षुध्यादिकं विनाशयतेति यजमान प्रार्थना।
अस्मिन् सूक्ते ओषध्यः अम्बइति संबुध्यन्ते अम्बेति संबोधनेन ओषध्यः मातृस्थानीया इतिगम्यते हे ओषध्यः युष्माकं धामानि = जातिभेदा वा क्षेत्राणि वा शतसंख्याकानि सन्ति। किंच युष्माकमंकुराः सहस्र संख्याकाः सन्ति शतसहस्रशब्दौ अत उपलक्षणविधया अनन्तत्वं ज्ञापयतः। हे ओषध्यः भवतोनाम बहुभेदोपेतत्वेसति युष्माभिरोषधीभिः शतसंख्याकाः क्रतवः निष्पाद्यन्ते। यज्ञादिषु व्रीहियवगोधूम श्यामाकादिभिः बहुभिः धान्यविशेषैः प्रयोगोस्ति = उपयोगोस्तीत्यर्थः। अतः तैः यज्ञाः निष्पाद्यन्त इति उच्यते क्रतुनिष्पादिकाः हे ओषध्यः मे यजमानस्य संबन्धि यदंगं तत् क्षुत्पिपासादि रोगरहितं कुरुत इति यागकर्त्री ओषध्यः प्रार्थ्यन्ते।
"ओषधीरितिमातरः इतिमंत्रे देवीः इति मातरः इति च पदद्वयमस्ति तेन ओषधीषु मातृबुद्धिः देवताबुद्धिश्च कर्तव्या भवति इति ज्ञायते अस्मिन् मंत्रे इतिशब्दः कश्चन अस्ति अयं हेत्वर्थः प्रयुज्यते। हे ओषध्यः यस्मात् कारणात् यूयं मातृसमानाः देवतासमानाश्च अतः युष्मान् प्रार्थये

देवताप्रार्थना सफला भवतीति वेदेषु बहुत देवताप्रार्थना श्रूयते । सा प्रार्थना कीदृशी इति चेत् अस्मदीयानि पापानि तथैव पापफलानि दुःखान्यपि विनाशयन्तु अस्मत्पः आगच्छत । अस्मदीयपापानां पापफलदुःखानां च निवारणार्थमेव अस्माभिः भवतीनां सेवा क्रियते अतः अस्मदीय दुःखं सर्वं विनाशयन्तु

ननु ओषधीनां प्रार्थनामात्रेण पापानां नाशः भवति वा पापप्रयुक्तं दुःखमपि नश्यति वा इति चेत् हन्त ? पापानुसारेणैव रोगाः संभवन्ति रोगानुसारेणैव दुःखानुभवो भवति रोगनिवृत्त्यर्थं औषधसेवैव अस्माभिः क्रियते औषधसेवानन्तरं रोगाणां निवृत्तौ दुःखमपि निवृत्तं भवति इति लोकानुभवसिद्धोऽयं विषयः यथा ओषधिसेवया रोगनिवृत्तिः भवति तादृशीनामोषधीनां प्रार्थना अवश्यं कर्तव्यैव । अतस्सा प्रार्थना सफलैव भवति ।

ननु लोके औषधसेवां विना रोगनिवृत्तिः न भवति खलु । विना औषधसेवां केवलानामोषधीनां प्रार्थनया किं भविष्यतीति चेत् उच्यते । यथा देवाः यज्ञादिषु आराध्यमानास्सन्तः फलप्रदाः भवन्ति तथा स्तुता अपि फलदा भविष्यन्ति तथैव औषधयोऽपि सेवयेव स्तोत्रेणापि रोगहारिण्यो भवन्तीति श्रुतिमर्यादया ज्ञायते । तत्रापि तासु अधिष्ठातृदेवतानां सत्वात् तासां ~~कर्म~~ स्तोत्रं फलप्रदं भवतीति बोध्यं । अस्मिन् विषये कांचिदुपाख्यां

श्रुति " श्रावयति " प्रजापतिरग्निमसृजत तꣳसृष्टꣳ रक्षाꣳस्यजिघांꣳसन्स एतद्राक्षोघ्नमपश्यत् तेनवै स रक्षाꣳस्यपाहत् ...... राक्षाꣳस्यप हन्ति इत्यादिना ,, कृ. य. तै. स. कां ५-प्र.१-अ.१०

कदाचित् प्रजापतिः सृष्टिकाले अग्निमसृजत तमग्निं सृष्टमात्रमेव रक्षांसि जघ्नुः तदास्मः प्रजापतिः " यदग्नेयानिकानि ,, इत्यारभ्य " अमितानुन्धयामि स्वा ꣳ अहं ,, इत्यन्तं राक्षोघ्नं सूक्तमपश्यत् = ज्ञातवान् तेनसूक्तपठनेन प्रजापतिः रक्षांसि हतवान् तस्मात् यत्र राक्षसबाधानिवृत्तिरावश्यकी तत्र इदं राक्षोघ्नं सूक्तं पठनीयं भवति। तेनसूक्तेनपठितेन राक्षोघ्नः अग्निः उत्पन्नस्सन् रक्षांसि विनाशयति यस्मिन् सूक्ते राक्षसहन्ता अग्निः प्रतिपाद्यते तत् सूक्तं राक्षोघ्नमिति व्यवह्रियते तद्वत् प्रकृतयोगेपि औषध्यः स्तोत्रेणापि रोगहारिण्योभवन्ति राक्षोघ्नस्तोत्रेण अग्निरिवेति बोध्यम्.

त्रयोदशमंत्रे किकिदीविरिति शब्दः अस्ति सः कंचन रोगविशेषं व्याचष्टे किकिरिति रोगानुकरणशब्दः कथम्? कंठे श्लेष्माधिक्यम् यदा भवति तदा अयं किकिरिति ध्वनिः उत्पद्यते इति श्रीविद्यारण्यस्वामिनः वदन्ति कंठे श्लेषाधिक्यसमये "घुर" "घुर" इति शब्दस्संजायते इति केचनवदन्ति अयं शब्दभेदः देशभेदेन वा याग्भेदेनवा स्यात् श्रीसायनाचार्याः जन्मतः यद्

शीया भवन्ति इति न जानं केचन जन्मत: अन्यदेशी
या: विद्याभ्यासकाले तद्भिन्न देशीया: भवन्ति ।
व्यवहारकाले पुन: ततोऽन्यदेशीया: भवन्ति । अयं किकि
रिति शब्द: यद्देशीयो वा इति नैव ज्ञायते । किंच कस्यां
भाषायां अयं किकिरिति शब्दोच्चारणमस्ति इत्यपि
नैव ज्ञायते । आंध्रदेशे तु खुर्‌खुर् इति शब्दोत्पत्ति:
तस्मिन् समये भवति इत्युच्यते इत:परं तत्वज्ञा: विचारयन्तु
तेन किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशे
ष: किकिदीविरिति उच्यते सचरोग: श्लेष्मजन्य: ।
पित्तजन्य इच भवति यदा पित्तजन्यो भवति तदा तस्य
रोगस्य वेग: तीव्र: भवति । अतएव तस्य रोगस्य श्येन
वत् तीव्रतरत्वात् श्येनइति नाम संपन्नं । तस्य रोग
स्य राजयक्ष्मादि व्यवहारोऽपि वर्तते अतएव श्रुति:
तं रोगं हे राजयक्ष्मादिरोग इति संबोधयति । हे राज
यक्ष्मादिरोग त्वं पित्तजन्येन श्लेष्मजन्येनच रोगेण
साकं पक्षेण नश्यस्व । अपिच हे राजयक्ष्मादिरोग ?
मयि त्वत्प्रवेशकाले त्वत्प्रवेशात् संप्राप्तया पीडया अहं
" हा कष्टमिति ,, शब्दं करोमि तस्य शब्दस्य "निहाका,,
इति नाम अनेन शब्देन साकं त्वं नश्यस्व । पूर्व - राज
यक्ष्मादि रोगनाशप्रार्थना । अधुनातु राजयक्ष्मादि रोग
जन्यस्य निहाकाशब्दस्य एवकारणेन राजयक्ष्मादि
रोगेण साकं नाशप्रार्थना क्रियत इतिभाव: । अत
" निहाका,, इति शब्दनाशे तत्कारण पीडनाशोऽपि अर्थ
सिद्ध एव कुत: ? पीडितस्सन्नेव खलु शब्दं करोति
पीडाभावे तत्कार्यनिहाका शब्द एव नास्ति । यद्वा
हे राजयक्ष्मादिरोग ? त्वं पीडया सह नश्यस्व इति वक्तुं

शब्दं पीडा यदा, कष्टं भवति तदा निद्राकाशब्दोपि

नास्तीत्यर्थः एतावता कार्यकारणोभय नाश प्रार्थना
कृता भवतीत्यर्थः। "निद्राका,, इति शब्दनाम्नि "नि,,
इत्यनेन नितरामिति "द्रा,, इत्यनेन बाध्याभिव्यंजन
कत्वं "क,, इत्यनेन कष्टमिति पीडाप्रयुक्तं नितरां द्रा
कष्टमिति, शब्द स्वरूपं ज्ञातव्यम्। अस्मिन्मंत्रे
वातस्य व्याख्या इति वर्तते तस्य पित्तजन्येन इत्य
र्थवर्णनम् कृतम् आयुर्वेदेन वातपित्तयोः कीदृशः
संबन्धः इत्यादिकं आयुर्वेदाभिज्ञैः वक्तव्यम्।

याश्चेदमितिमंत्रे मंत्रदृष्टा अथर्वणर्षिर्वा ओषधिदेव
ताः प्रार्थ्यते। अहं ओषधिदेवताः प्रार्थये। मदीयां
प्रार्थनाम् काश्चन ओषधि देवताः शृण्वन्ति अन्याः
काश्चन ओषधिदेवताः दूरस्थ या भवति तया परागताः
सद्यः इति शृण्वन्ति तास्सर्वाः ओषधिदेवताः
अस्मिन महाग्निचयनारंभे कर्मणि संगताभूत्वा याग
कर्त्रे क्षुधादिरोगचिकित्सां सम्यक् कुरुत इति ओष
धिप्रार्थनाक्रियते।

हे ओषधयः अन्यचिकित्सार्थमेव कश्चित्
पुरुषः ओषधितत्त्वज्ञः भवतीनां मूलानि खननेन गृहीतु
मिच्छति सः न विनश्यतु इति एका प्रार्थना।

ननु ओषधीनां सचेतनत्वात् चेतनानाम्
खननरूपेण उत्पाटने तेषांविनाशः अवश्यंभावी
तदा तत्खननरूपं पापमपि अवश्यंभावि एवंस्थि
ते यः एवमोषधीः उत्पाटयति सः अवश्यं पापा
तिशयेन विनशिष्यत्येव "मा विनश्यतु,, इति प्रार्थना

यां कृतायामपि हिंसायां नश्यादिति काचन शंका जायते । तस्या इशंकायाः समाधानमेवं वक्तव्यम् । "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति शास्त्रानुसारम् ओषधीनाम् स्थावरं जन्म स्वाभाविकमेव ता ओषध्यः मानवानां भुक्तिवारणार्थं यज्ञादिषु उपयोगार्थं रोगनिवारणार्थमेव उत्पन्नाः परोपकारप्रधानत्वात्तासां परोपकारार्थमेव उन्मूल्यन्ते । अतः तासामुन्मूलनमवश्यं भविष्यत्येव । सचेतना नाम विशिष्टप्राणिनाम् हननेन यत् पापं तादृशं पापम् एतासामुत्पाटनेन न भविष्यति

ननु तासां खननं यदि स्वाभाविकं तर्हि प्रार्थना किमर्था ? ओषधीष्वपि चैतन्यांशस्य सत्वात् तत्खननेन स्तोकं पापं स्यादिति तादृशपापपरिहारार्थम् प्रार्थना कर्तव्या भवति । यथा दर्शपूर्णमासप्रकरणे अध्वर्युः देवतार्थं बर्हिः छेत्तुं गत्वा तत्र "देवानां परिषूतमसि" इति मंत्रं वदन् भो दर्भजात ? त्वं देवानाम् र्थे परिगृहीतमसि न तु मया स्वगृहाच्छादनार्थं परिगृहीतमसि । किंच मया परिगृहीतस्य सर्वस्य देवतार्थत्वमेव तत्रैकदेशः देवार्थः अवशिष्टभागः मदर्थ इति नास्ति इति विज्ञापयति । अस्मिन् विषये श्रुतिः उदाहरणं दर्शयति "अथो यथा वस्यसे प्रतिप्रोच्याहेदं करिष्यामीति । एवमेव तदध्वर्युर्देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति । आत्मनोऽहिंस्यायै" इति ·

यथा लोके कश्चित् भृत्यः राजनियोगात् ग्रामेषु गत्वा स्वयं बलात् गृह्यमाणं दधिक्षीरादि द्रव्यं राज्ञे देयं धनं वा वस्तु मत्तमाय राज्ञे स्वीकरोमि न तु मदर्थं इति प्रजानामग्रे

उक्ता [illegible] इदं हरिष्यामि इतिब्रूते तथैव अध्वर्युरपि देवेभ्यएव इदं स्वीकरोमि इत्युक्त्वा बर्हिः छिनत्ति देवार्थत्वात् बर्हिश्छेदनस्य छेदनप्रयु क्तहिंसादोषः आगमनः नास्ति इति श्रुतेः रहस्यं बोध्यं। एतावता छेत्तुः हिंसादोषो मास्तु इति प्रार्थना कृता अधुना यस्य रुग्णस्य चिकित्सार्थं ओषधीनां खननं क्रियते तस्य रुग्णस्यापि खननप्रयुक्तदोषः मास्तु इतिप्रार्थना क्रियते। किमर्थमिति चेत्। लौकिकः रोगी सः पापी इतिवक्तुं शक्यं रोगस्य पापमूलकत्वात् अहं पापेन रोगमनुभवामि तद्रोगनिवारणाय औष धसेवार्थं मम ओषधीनामपेक्षास्ति ताः ओषध्यः मदर्थमेव उत्खन्यन्ते तदुत्पाटनप्रयुक्तं पापं पुनः मां प्रविशेद्वा इति तस्य शंकास्यात् अतः प्रार्थना क्रियते। अनयाप्रार्थनया वनस्पतिदेवता संतुष्टासती अवश्यं रोगं विनाशयिष्यति। अपिच हे ओषध्यः किं बहुना? मत्संबन्धि प्राणी पुत्रादयः द्विपादो वा, गवादयः चतु ष्पादो वा तेषां सर्वेषामपि भवद्य एव जीवनभूताः। भवतीनामनुग्रहेण मदीयास्सर्वेऽपि रोगरहिता भवन्तु इति ओषधि प्रार्थना

## ओषधिप्रयोजनम्

"यदहं वाजयन्निमा ओषधीर्हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा॥" कृ.य.तै.सं ५-२-६

अहं बुभुक्षितः अतः अन्नमिच्छन् अन्नभूताः फल वतीः व्रीह्यादयोषधीः द्राक्षादिलताश्च हस्ते धृत्वा तिष्ठामि। यदा एवं तिष्ठामि तदैव यक्ष्मस्य क्षुधादि रोगस्य स्वरूपं नश्यति पदार्थानां भोजनात् प्रागेव

क्षुधादि रोगाः ... दृश्यन्ते लोके कश्चित सिद्ध भोज्यपदार्थः अन्यः असिद्ध भोज्यपदार्थः इत्युभौ स्तः । उभयोरपि क्षुत् यद्यपि समानैव । तथापि असिद्धभोज्यपदार्थस्य सिद्धभोज्यपदार्थ पुरुषापेक्षया क्षुत् अधिकेव दृश्यते कुतः? मम भोक्तुं गोधूमादयोषधयोपि न सन्ति कदा लभेयं? कदा क्षुत् निवर्तते! इत्याकुलितचित्तत्वात् तस्य अधिकेव दृश्यते क्षुत् सिद्धभोज्यपदार्थस्य पुरुषस्य तु ब्रीह्याद्योषधयः भोक्तुं सिद्धतया हस्ते सन्तीति संतोषेण तस्य क्षुत् स्तोकेव दृश्यते तद्वत इत्यर्थः

अत कश्चन दृष्टान्त उच्यते श्रुत्या । अरण्ये शशः अन्यत धावितुमवकाशाभावे सति तत्रैव स्थित्वा व्याधस्य अयं मृत इति ज्ञानं जनयितुं संकुचितावयवो भूत्वा भीतः सन् कर्णाभ्यां नेत्रे पिधाय भूमि संश्लिष्टो मृत इव तिष्ठति परं न मृतः अस्य श्रोत्रे विशाले अतएव अस्य कर्णबिडाल इत्यपि नामान्तरमस्ति नेत्रपर्यन्तं कर्णप्रसारः तस्यास्ति कर्णाभ्यां नेत्राच्छादनमपि तेन कर्तुं शक्यते अयं यथा मृत इव दृश्यते तथा हस्तगतसिद्धभोज्यौषधिवतः पुरुषस्यापि क्षुद्रोगः नष्ट सदृशो भवतीत्यर्थः।

यथा युद्धे प्रतिपक्षिणः सेनां जेतुं कश्चन राजा स्वसुहृद्भिः राजभिस्सह रणरंगं प्रति आगच्छति तत्समये परस्परमनुकूला राजानः सर्वे संभूय शत्रुं राजानं जयन्ति तद्वत् सर्वा ओषधयः फलदा

नाथ क्षेत्र संगता भवन्ति तथा परस्परं क्षेत्रेषु संगता स्वोषधीषु सतीषु कश्चित् ओषधि रसवीर्य प्रख्याता मेधावी विप्रः भिषक् इत्युच्यते सः क्षुधादिरोग चिकित्सकश्च भवति। सः कथं क्षुधादि रोगचिकित्सको भवति इति चेत् उच्यते। यदा ओषध्यः पक्वा भवन्ति तदा राक्षस बाधानिवारणार्थम् तदोषधि जन्यगोक्षुरादि पिष्ट द्वारा राक्षोघ्नं पुरोडाश निर्वापं कृत्वा रक्षसां हन्ता भवति राक्षसोपद्रवरूपरोगं विनाशयतीत्यर्थः। न केवलं राक्षसबाधारूप रोगनिवारणमेव करोति। किंतु ओषधीषु पथ्यापथ्य विभागाभिज्ञत्वात् पथ्यौषधि दानेन आरोग्यसंपादको भवति प्रमादादपथ्यौषधि भक्षणद्वारा संप्राप्तान् रोगान् औषधि दानेन् विनाशयतीत्यर्थः। अतएव अस्य विप्रस्य भिषक्" इति "रक्षोहा" इति "अमीवचातन" इति विशेषण त्रयमुपात्तं वेदे।

इमास्सर्वा ओषध्यः औषधरूपेण परिणताः अस्माभिः भुज्यमानाः पीयमाना इच सत्यः उदर मध्ये प्रविश्य अजीर्णादि दोषमतिक्रम्य देहे व्याप्ताः भवन्ति तत्तद्रोगान् विनाश्य व्याप्ता भवन्ति तत्क भवन्ति तत्र दृष्टान्त उच्यते। यथा रात्रौ गुप्तचोरः गोष्ठं प्रविश्य गामपहर्तुं सावधानः गौशालां सर्वतो व्याप्नोति तद्वदित्यर्थः। शरीराणां संबन्धि यत्किंच पापं शरीरोत्पादयति सारादि रूपं पापफलं यत्किंचि दस्ति तत्सर्वमोषध्यः विनाशयन्तीत्यर्थः

हे यजमान ? या ओषधयः भक्षणानन्तरं तवशरीर माक्रम्यतिष्ठन्ति । या ओषध्यः भक्षणानन्तरम् शरीरे तत्तत्पर्वप्रदेशेषु रसरूपेण प्रविष्टवत्यः तास्सर्वा ओषध्यः तव यक्ष्मशब्दवाच्यं रोगं विशेषेणनाशयन्तु ।

तत्रदृष्टान्तः उच्यते लोके यो राजा स्वकीयपरकीय पक्षपातराहित्येन शास्त्रीयमार्गे शेते = वर्तते । सः मध्यमशीरिति शब्देन उच्यते तादृशोराजा दुष्टान्जनान् प्रति उग्रो भूत्वा यथा विनाशयति ~~[illegible]~~ः तद्वत् त्वच्छरीरे स्थिता ओषध्योपि रोगनिवारिण्यो भवन्तीत्यर्थः

लोके काश्चन ओषध्यः फलयुक्ताः अन्याः काश्चन फलरहिताः अपराः काश्चन पुष्परहिताः इतराः काश्चन पुष्पसहिताः तास्सर्वा अपि बृहस्पतिप्रसूता भवन्ति ।

नन्वोषधीनां बृहस्पतिप्रसूतत्वं कथमिति चेत् उच्यते सृष्ट्यादौ देवेभ्यस्सकाशात् ओषध्यः उत्पन्ना इति "याजाता ओषधयो देवेभ्यः" इति श्रुत्या प्रतिपादितमस्ति तेषु देवेषु मध्ये बृहस्पतिरपि देवविशेषएव । नकेवलं देवविशेषः । किंतु देवानां गुरुः देवानां यदा यज्ञचिकीर्षा तदा देवयज्ञेष्वपि बृहस्पत्यनुग्रहः आवश्यकः बृहस्पतेः मुख्यमार्त्विज्यं ब्रह्मत्वं "बृहस्पतिरुपवक्ता" इत्यनेन समीपेस्थित्वा इति श्रुत्या ज्ञायते "उपवक्ता"

तत्त कर्मसु अनुजानानो ब्रह्मा विवक्षित इत्युक्तंभा
ष्ये ओविद्यारण्यचरणैः ओषधीनां प्रयोजनेषु
यज्ञानुष्ठान प्रयोजनमप्यस्ति । यज्ञेषूपयोक्तव्या:
ओषधयः : व्रीहियववेणुपूतीका श्योम पलाशाश्व
त्थादयः । बृहस्पतिरपि यज्ञानुष्ठान निर्वहणे मुख्यः
बृहस्पतेरपि देवत्वात् देवप्रसूतत्वस्य ओषधीनां
सिद्धमेव एतादृश्यः हे ओषधयः ! अस्मान् पापा
त् मोचयन्तु इति ओषधिप्रार्थना ।

ओषधीनामधिपतिः सोमो राजा इति श्रुतिमर्यादा
स्वकीयेन स्वामिना सोमेन राज्ञा सह ओषधि देवता:
एवं संवादं कुर्वन्ति । किमिति चेत् उच्यते ओषधि
स्वामिनो ब्राह्मणः अस्माकं मूलैर्वा रसेन वा
यस्मै कस्मैचित् रुग्णाय चिकित्सां करोति हे राजन्!
सोम ! तं आतुरं वयं व्याधेः उत्तारयामः इति
निर्णयात्मकं संवादं स्वराजसमीपे अकुर्वन् इति

वेदेषु उल्लिखित ... ग्रन्थ

निर्दिष्ट प्रामाणिक ग्रंथ सूची

(1) कृष्णयजुर्वेद तैत्तिरीय संहिता — पृष्ठ संख्या 2, 3, 10, 11, 12, 13, 14, 16, 17, 20, 27, 29, 31, 33, 36, 37, 41, 43, 45, 47, 49, 50, 53, 57, 65, 67, 73, 82, 83, 84, 85, 92, 93, 95, 96, 97, 99, 103, 106, 109, 110, 113

(2) कृष्णयजुर्वेद तैत्तिरीयब्राह्मणम्, 1, 5, 6, 7, 8, 17, 18, 54, 55, 56, 66, 67, 71, 78, 86, 88, 91, 94, 101

(3) कृष्णयजुर्वेदारण्यकम् 79, 80, 103, 113,

(4) आपस्तंबादिकल्पसूत्रम् 7, 20, 30, 34, 35, 36, 38, 41, 51, 52, 102, 109

(5) अमरकोश: 28, 31, 35, 58, 66, 71, 72, 73, 78, 85, 86, 93

(6) सायनाचार्यनिर्दिष्ट स्मृतिवाक्यम्, 27, 29, 42, 48, 78, 85

(7) पाणिनिधातु: 58, 71, 75, 78

(8) पाणिनिसूत्रम् 75, 80

(9) कात्यायन वार्तिकम् 87

(10) सायनाचार्य: 87

(11) भट्टभास्कराचार्य: 75

(12) छान्दोग्योपनिषत् 33, 37, 86, 89

| | | पृष्ठ संख्या |
|---|---|---|
| (13) | ब्रह्मसूत्रम् | 86 |
| (14) | ऋग्वेदमंत्र: | 9, 37, 61 |
| (15) | सामवेद: | 51 |
| (16) | मनुस्मृति: | 52 |
| (17) | महाभाष्यम् | 84 |
| (18) | कौषीतकि ब्राह्मणोपनिषत् | 27 |
| (19) | मीमांसान्याय: | 90 |
| (20) | भगवद्गीता | 19 |
| (21) | एकाग्निकांडमंत्र: | 9, 13, |
| (22) | मुंडकोपनिषत् | 10, 48 |
| (23) | महाकविकालिदास: | 98 |
| (24) | श्रीमद्रामायणे पुष्पकांड: | 100 |

D



| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 51 | 4 | प्रार्थते | प्रार्थ्यन्ते |
| 52 | 5 | धम | धर्म |
| ,, | 6 | सस्का | संस्कार |
| 56 | 11 | एक | ऐक |
| 59 | 7 | कउच | कञ्चन |
| ,, | 8 | कौआ | कौआरूपका |
| 63 | 8 | कुंओवर्तते | कूपः |
| ,, | 13 | अस्मिन् | |
| ,, | 14 | आश्चर्यं | आश्चर्ये |
| 64 | 7 | ज्वारा | ज्वाला |
| ,, | 14 | | भवति |
| 65 | 7 | पन्थाः | पन्थाः |
| 66 | 5 | | यत् योगीश्वस्तितात् |
| 67 | 2 | | योगीप |
| ,, | 9 | मर्थं | मर्थं |
| ,, | ,, | आउपः | आशयः |
| 68 | 11 | | तत्कथं संगच्छते इतिचेदुच्यते |
| ,, | 16 | निष्पादय | निष्पन्न |
| ,, | 17 | | सत्कृत्यः |
| 69 | 9 | व्याप्त | व्याप्त |
| ,, | 21 | इन्द्रस्व | इन्द्रस्यस्व |
| 70 | 21 | पुकावा | पुकोवा |

| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 81 | 22 | चैते | चेत |
| 82 | 2 | तम | ताम |
| 83 | 18 | ल्ट | ल |
| 84 | 19 | प्रार्थपति | प्रार्थयति |
| 86 | 11 | दौष | दोष |
| " | 19 | ति | गति |
| 88 | 18 | सँ | स: |
| 91 | 11 | खा | खात्वं |
| 92 | 26 | क्काना | अत ओषधिइञ्ज: बीजपद: |
| 93 | 12 | श्रोत | श्रोते |
| " | " | लँगल | लांगल |
| " | 26 | काल | युग |
| 95 | 22 | ते | तै |
| 96 | 18 | ओजस | ओजसि |
| 97 | 5 | ओजस | ओजसि |
| " | 9 | जस | जसि |
| 100 | 1 | उपरि | अनन्तर |
| " | 7 | नः | धःतदधिमार्जि देवताः |
| 101 | 21 | परस्सर | परस्पर |
| " | 26 | मास्कु: | मासिम |
| 102 | 15 | दपाम | दधिपाम: |

( 6 )



| पृष्ठ संख्या | पंक्ति संख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 102 | 16 | णा | णां |
| ,, | 17 | गानुसारं | कामनानुसारम् |
| 103 | 16 | प्रतौवपि | प्रन्तावपि |
| 104 | 8 | हे ओषध्य | हे ओषध्यः |
| 107 | 23 | जिह्वाका | जिह्वाका इति |
| 108 | 13 | गतः | गताः |
| ,, | 20 | तु | तु इति |
| 109 | 1 | द्रा | द्रा इति |
| ,, | 3 | ता | तां |
| 110 | 25 | हस्ता | हस्ते |
| ,, | ,, | ब्रह्मा | ब्रह्मा |
| 111 | 17 | तस्य | तस्या |
| 112 | 14 | उक्तौ | उक्ता |